॥ क्षारत्रय ॥

**सर्जीक्षारं यवक्षारं टङ्कणं च तृतीयकम् ॥ ९ ॥**
**क्षारत्रयमिदं ख्यातं–**

॥ मूत्रवर्गः ॥

अजाश्वमहिषीगवाम्

**नारीमेषीखरोष्ट्रीणां मूत्रवर्गो गजस्य च ॥ १० ॥**

मित्र पंचकम् ।–**मध्वाज्यटंकणं गुंजा गुडः स्यान् मित्रपंचकम् ॥**

पित्त वर्गः–**नराश्वशिखिगोमत्स्यपित्तानि पित्तवर्गके ॥ ११ ॥**

वसा पंचकम् ।–**मत्स्याहिनरमेषोणां शिखिनां च वसा मता ॥**

॥ रक्तवर्गः ॥

मञ्जिष्ठा कुंकुमं लाक्षा दाडिमं रक्तचन्दनम् ॥ १२ ॥
बन्धूकं करवीरं च रक्तवर्गो ह्ययं भवेत् ॥

॥ पीतवर्गः ॥

**कुसुंभं किंशुकं रात्रिः पतङ्गं मदयंतिका ॥ १३ ॥**
**पीतवर्गो ह्ययं ख्यातो दिव्यौषधिगणं शृणु ॥**

॥ दिव्यौषधिगणः ॥

**अजकर्णी शंखपुष्पी रुदंती काकतुण्डिका ॥ १४ ॥**
**हंसपादी व्याघ्रनखी चांडाली क्षीरकंदकः ॥**
**वन्ध्याककोंटकी रंभा गोजिह्वा कोकिलाक्षकः ॥ १५ ॥**
**शाकवृक्षो हेमवल्ली पातालगरुडी शमी ॥**
**कटुतुम्बी वज्रलता सूरणं वनसूरणम् ॥ १६ ॥**
**मेषशृङ्गी चक्रमर्दो जलकुम्भी शतावरी ॥**
**गुञ्जा कोशातकी नीली आखुकर्णी त्रिपर्णिका ॥ १७ ॥**
**कुक्कुटी कृष्णतुलसी पुंखा श्वेतापराजिता ॥**
**गरुडी लाङ्गली ब्राह्मी चाङ्गेरी पद्मचारिणी ॥ १८ ॥**

अजामारी काकमाची देवदालीन्द्रवारुणी ॥
काकजंघा शिखिशिखा सर्पाक्षी नागवल्लिका ॥ १९ ॥
मीनाक्षी कृष्ण धत्तूरो बला नागबला जया ॥
मुण्डी महाबला धूनी त्रिविधं चित्रकं निशा ॥ २० ॥
मूर्वा काञ्चनकं कन्या पेटारी सूर्यवर्तकः ॥
विष्णुकान्ता कारवल्ली वाकुची सिन्दुवारिका ॥ २१ ॥
स्वर्णपुष्पी खण्डजारी मञ्जिष्ठा पीलुकं वचा ॥
स्नुहि रक्तस्नुही बिल्वं कार्पासः कंगुणी घना ॥ २२ ॥
पलाशाङ्कोलविजया मेघनादार्कसर्षपाः ॥
ब्रह्मदण्डी महाराष्ट्री श्वेता रक्ता पुनर्नवा ॥ २३ ॥
उदुंबरः सोमलता कुंभी पुष्करमूलकम् ॥
तिलपर्णी कृष्णजीरा वृश्चिकाली च कालिका ॥ २४ ॥
करवीरोग्निदमनी बृहती भूमिपाटली ॥
यवचिञ्चा चन्द्रलता दर्कंटी वनराजकम् ॥ २५ ॥
बदरी लज्जरी लाक्षा चणा वर्तुलपत्रका ॥
अपामार्गो भूकदंबो विषमुष्ट्येकवीरकः ॥ २६ ॥
गोरंभा कदली जाती मुशली सहदेविका ॥
एरण्डः सैन्धवं पथ्या शुंठी मण्डूकपर्णिका ॥ २७ ॥
मरुवको हिंगु वालो लक्ष्मणा हस्तिमूलिका ॥
क्षीरवृक्षाश्च ये सर्वे तथा नानाविधं विषम् ॥ २८ ॥
दिव्यौषधिगणः ख्यातो रसराजस्य साधने ॥
व्यस्तं वाथ समस्तं वा यथालाभं नियोजयेत् ॥ २९ ॥

विषवर्गः

तीव्रगंधरसस्पर्शैर्विविधैस्तु वनोद्भवैः ॥
मर्दनात्स्वेदनात्सूतो म्रियते बध्यतेऽपि च ॥ ३० ॥
रक्तशृंगी कालकूटं हारिद्रं सक्तुकं तथा ॥
मौस्तिकं विषवर्गः स्यात्–

वज्रमूषा १

—मूषाकरणसमुच्चये ॥

तुषं वल्कं समं दग्धं तत्पादांशा च मृत्तिका ॥
कृष्णी पाषाणपादं च वज्रवल्ल्या द्रवैर्दिनम् ॥ ३१ ॥
मर्दयेत् कारयेन्मूषां वज्राख्यां रसबन्धकाम् ॥

॥ वज्रमूषा २ ॥

वल्मीकमृत्तिकाङ्गाराः पुराणं लोहकिट्टकम् ॥ ३२ ॥
श्वेतपाषाणकं चैतत् सर्वं चूर्ण्यं समं समम् ॥
सर्वतुल्यं तुषं दग्धं सर्वं तोयेन मर्दयेत् ॥ ३३ ॥
मूषासंपुटकं कुर्यात् सन्धिं लिप्याच्च तेन वै ॥
सर्वकार्यकरा एषा वज्रमूषा महाबला ॥ ३४ ॥

॥ वज्रमूषा ३ ॥

गारा दग्धास्तुषा दग्धा दग्धा वल्मीकमृत्तिका ॥
गजाश्वानां मलं दग्धं यावत्तत् कृष्णतां गतम् ॥ ३५ ॥
पाषाणभेदिपत्राणि कृष्णा मृच्च समं समम् ॥
वज्रवल्ल्या द्रवैर्मर्द्यं दिनं वा शोषयेद्दृढम् ॥ ३६ ॥
तेन कोष्ठं वङ्कनालं वज्रमूषां च कारयेत् ॥
वर्तुला गोस्तनाकारा वज्रमूषा प्रकीर्तिता ॥ ३७ ॥
मूर्च्छने मारणे बन्धे ढंकमेलापके हिता ॥
सैव छिद्रान्विता मध्यगम्भीरा सारणोचिता ॥ ३८ ॥
प्रकटा श्रावकाकारा बीजनिर्वापणे हिता ॥

॥ इति सर्वमूषाः ॥

## ॥ अथ रसशोधनमाह ॥

॥ रसशोधनविधिः १ ॥

सूतं धान्याभ्रकं तुल्यं दिनं पुनर्नवाद्रवैः ॥
मर्दितं तप्तखल्वे तु वज्रमूषास्थितं पचेत् ॥ ३९ ॥

भूधरस्थं पुटैकेन समुद्धृत्य विमर्दयेत् ॥
पूर्ववत्पूर्वजैर्द्रावैस्तद्वद् कृत्वा च पाचयेत् ॥ ४० ॥
पुनर्मर्द्य पुनः पाच्यं दशवारं च पूर्ववत् ॥
पातयेत्पातनायंत्रे सम्यक् शुद्धो भवेद्रसः ॥ ४१ ॥

॥ रसशोधनविधिः २ ॥

रसस्य दशमांशं तु गन्धं दत्वा विमर्दयेत् ॥
जम्बीरोत्थैर्द्रवैर्यामं पात्यं पातनयंत्रके ॥ ४२ ॥
पुनर्मर्द्य पुनः पात्यं सप्तवारं विशुद्धये ॥

॥ रसशोधनविधिः ३ ॥

अथवा पारदं मर्द्य तप्तखल्वे दिनावधि ॥
कुमारी–रजनी–चुर्नैः पात्यं पातनयंत्रके ॥ ४३ ॥
कन्याग्नित्रिफलाभिश्च पुनर्मर्द्य च पातयेत् ॥
पुनर्मर्द्य पुनः पात्यं सप्तवारं विशुद्धये ॥
इत्येवं सप्तधा कुर्यात् सम्यक् शुद्धो भवेद्रसः ॥ ४४ ॥
युक्तं सर्वस्य सूतस्य तप्तखल्वे विमर्दनम्
शोधने चारणे चैव जारणे च विशेषतः ॥
मूर्च्छने मारणे चैव बन्धने च प्रशस्यते ॥ ४५ ॥

॥ तप्त खल्वः ॥

अजाशकृत्तुषाग्निं च भूगर्ते त्रितयं क्षिपेत् ॥
तस्योपरि स्थितं खल्वं तप्तखल्वमिदं भवेत् ॥ ४६ ॥
खल्वं लोहमयं शस्तं मर्दकं चैव लोहजम् ॥
तद्भावे शिलोत्थं वा योग्यं खल्वं च मर्दकम् ॥ ४७ ॥

॥ हिंगुलात् पारदनिष्काशनविधिः १ ॥

अथवा हिंगुलात् सूतं ग्राहयेत्तन्निगद्यते ॥
गोमूत्रैर्माहिषैर्मूत्रैस्तिलतैलसुराम्लकैः ॥ ४८ ॥
सप्ताहं हिंगुलं पाच्यं लोहपात्रे क्रमाग्निना ॥
चालयेल्लोहदण्डेन द्रावं कृत्वा पुनः पुनः ॥ ४९ ॥

सद्रवं तं समादाय शिखिपित्तेन भावयेत् ॥
दिनान्ते पातनायन्त्रे पातयेच्चण्डवह्निना ॥ ५० ॥
सप्तकञ्चुकनिर्मुक्तः ख्यातोऽयं शुद्धसूतकः ॥ ५१ ॥
कन्याभिस्त्रीफलाभिश्च पुनर्मर्द्य च पातयेत् ॥
इत्येवं सप्तधा कुर्यात् सम्यक् शुद्धो भवेद् रसः ॥ ५२ ॥

॥ हिंगुलात्पारदनिष्कासनविधिः २ ॥

दिनैकं हिङ्गुलं खल्वे मर्द्यमम्लेन केनचित् ।
पातयेत् पातनायंत्रे दिनान्ते तत्समुद्धरेत् ॥
विना कर्माष्टकेनैव सूतोऽयं सर्वकार्यकृत् ॥ ५३ ॥
सर्वसिद्धमतमेतदीरितं सूतशुद्धिकरमद्भुतं परम् ॥
अल्पकर्मविधिभूरिसिद्धिदं देहलोहकरणे हि शस्यते ॥ ५४ ॥

इति श्री पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गतवादिखण्डे ऋद्धिखण्डापरनामके वर्गसाधनादिरसशोधनान्तो द्वितीयोपदेशः ॥ २ ॥

## ॥ अथ श्री वादिखण्डे तृतीयोपदेशः ३ ॥

षट्काष्टकं ह्यष्टकमष्टकं च शोध्यं विमर्द्यं च यथोदितं तत् ॥
वज्रादिलोहान्तकमुक्तपूर्वं तद्वक्ष्यते सूतवरस्य सिद्ध्यै ॥ १ ॥

॥ वज्रजातयः ॥

श्वेता रक्ताः पीतकृष्णा द्विजाद्या वज्रजातयः ॥
पुंस्त्रीनपुंसकाश्चेति लक्षणेन तु लक्षयेत् ॥ २ ॥
वृत्ताः फलकसंपूर्णास्तेजस्वन्तो बृहत्तराः ॥
पुरुषास्ते समाख्याता रेखाबिन्दुविवर्जिताः ॥ ३ ॥
रेखाबिन्दुसमायुक्ताः षडस्रास्ताः स्त्रियः स्मृताः ।
त्रिकोणपत्रदेहं यद्दीर्घं यत्स्यान्नपुंसकम् ॥ ४ ॥
सर्वेषां पुरुषाः श्रेष्ठा वेधका रसबन्धकाः ।
स्त्रीवज्रा देहसिद्ध्यर्थं क्रामकं स्यान्नपुंसकम् ॥ ५ ॥

॥ वज्रशोधनं १ ॥

गृहीत्वाथ शुभं वज्रं व्याघ्रीकन्दोदरे क्षिपेत् ।
महिषीविष्ठया लिप्त्वा तुलाग्नौ च पुटे पचेत् ॥ ६ ॥
अहोरात्रात्समुद्धृत्य हयमूत्रैर्निषेचयेत् ।
व्याघ्रीकन्दे पुनः क्षिप्त्वा वज्रकंदोदरे क्षिपेत् ।
हयमूत्रैर्निषिच्याद्य पुटेत्सिंच्याच्च पूर्ववत् ॥ ७ ॥
एवं सप्तदिनैः शुद्धं वज्रं स्यान्नात्र संशयः ।

॥ वज्रशोधनं २ ॥

कुलत्थकोद्रवक्काथहयमूत्रस्नुहीपयः ॥ ८ ॥
क्षिप्त्वा भाण्डे क्षिपेत्तस्मिन् व्याघ्रीकन्दगतं पविम् ।
दोलायंत्रे दिवारात्रौ समुद्धृत्य पुनः क्षिपेत् ॥ ९ ॥
व्याघ्रीकन्दं महाकंदे क्षिप्त्वा गजपुटे पचेत् ।
तत्पक्कं कांचनद्रावैः सेचयेच्छुद्धिमाप्नुयात् ।

॥ वज्रशोधनं ३ ॥

आखुकर्णी मेघनादः मियङ्गुर्मेषश्रृङ्गिका ।
अम्लवेतसनिर्गुण्डीकुलत्थकोद्रवाः शमी ॥ ११ ॥
मुनिश्च हयमूत्रेण कषायं कारेच्छुभम् ।
जम्बीरे सूरणे वाऽथ क्षिप्त्वा वज्रं दिनं पचेत् ॥ १२ ॥
पूर्वकाथेन दोलायां शुद्धिमाप्नोति नान्यथा ॥

॥ वज्रमारणं १ ॥

शुद्धं वज्रं मत्कुणानां रक्तैर्लिप्त्वा धमेत्तु तत् ॥ १३ ॥
अग्निवर्णं क्षिपेन्मूत्रे गर्दभोत्थे पुनः पुनः ॥
लेपितं धामितं तद्वदेवं कुर्यात् त्रिसप्तधा ॥ १४ ॥

॥ वज्रमारणं २ ॥

तालकं मत्कुणैः पिष्ट्वा गोले तस्मिन्क्षिपेत्तु तत् ॥
रुध्वा मूषां धमेद्गाढ्यांत् हयमूत्रे विनिक्षिपेत् ॥ १५ ॥

समुद्धृत्य पुनस्तद्वत् सप्तवारान्मृतो भवेत् ॥

॥ वज्रमारणं ३ ॥

मेषशृंगी भुजंगास्थि कूर्मपृष्ठं शिलाजतु ॥ १६ ॥
गन्धकं कान्तपाषाणं मुनिपुष्पं सतालकम् ॥
त्रिक्षारं पंचलवणं मेषशृङ्गीन्द्रवारुणी ॥ १७ ॥
वज्रवल्ली मूषकर्णी बदरीकुड्मलानि च ॥
मूषकस्य मलं स्तन्यं स्नुह्यर्कक्षीरमत्कुणाः ॥ १८ ॥
पंचाङ्गां शरपुङ्खां च हस्तिनीरं नृछागयोः ॥
पेटारीबिजं स्त्रीपुष्पं पारावतमलं शिलाम् ॥ १९ ॥
पुष्पाणि चैव बाकुच्याः पंचाङ्गं निम्बकस्य च ॥
धात्रीवृक्षस्य पंचाङ्गं गोरंभा चाजमूत्रकम् ॥ २० ॥
हंसपादी वज्रकन्दं बृहतीफलसूरणे ॥
गोजिह्वा कर्कटं मांसं मूत्रवर्गं च मिश्रयेत् ॥ २१ ॥
एतत्समस्तं व्यस्तं वा यथालाभं सुपिण्डितम् ॥
तत्पिण्डे निक्षिपेद्वज्रमन्धमूषागतं पुटेत् ॥ २२ ॥
कुलत्थं कोद्रवं पिष्ट्वा हयमूत्रैर्विलोलयेत् ॥
तन्मध्ये सेचयेत्तप्तां मूषां पुटविनिर्गताम् ॥ २३ ॥
एवं पुनः पुनः कुर्यादेकविंशतिवारकम् ॥
आदाय पूर्वजं वज्रतालेे मत्कुणपेषिते ॥ २४ ॥
गोलके निक्षिपेद्रुध्वा मूषां तीव्रानले धमेत् ॥
इत्येवं सप्तधा ध्मात्यं हयमूत्रैर्निषेचयेत् ॥ २५ ॥
अनेन क्रमयोगेन मृतं भवति निश्चितम् ॥
तं मृतं चूर्णयेत्स्वल्वे सिद्धयोग उदाहृतः ॥ २६ ॥

॥ वज्रमारणं ४ ॥

भ्रामकस्य मुखं तार्क्ष्यं पेटारीबीजटङ्कणे ॥
क्षारं चोत्तरवारुण्या गन्धकं तालकं शमी ॥ २७ ॥

चिञ्चाबीजं मेषशृंगी स्त्रीपुष्पं चाम्लवेतसम् ॥
पञ्चाङ्गं शरपुङ्खायाः शशदन्ताः शिलाजतु ॥ २८ ॥
एतत्समस्तं व्यस्तं वा यथालाभं सुचूर्णयेत् ॥
स्नुह्यर्कोन्मत्तवारुण्याः क्षीरैः स्तन्यैर्विमर्दयेत् ॥ २९ ॥
तद्गोलके क्षिपेद्वज्रं रुध्वा मूषां धमेद् दृढम् ॥
गुडूचीं सैन्धवं हिंगु समुस्तोत्तरवारुणीम् ॥ ३० ॥
क्राथैः कौलत्थकैः पिष्ट्वा तस्मिन्द्रावैर्निषेचयेत् ॥
तद्वज्रं पूर्ववद्गोले क्षिप्त्वा रुध्वा धमेत्तथा ॥ ३१ ॥
सेचनान्तं पुनः कुर्यादेकविंशतिवारकम् ॥
तालमत्कुणयोगेन सप्तवारं पुनर्धमेत् ॥ ३२ ॥
सेचयेदश्वमूत्रेण तद्वज्रं म्रियते ध्रुवम् ॥

॥ वज्रमारणं ५ ॥

त्रिवर्षरूढकार्पासमूलमादाय पेषयेत् ॥ ३३ ॥
त्रिवर्षनागवल्ल्या वा निजद्रावैः प्रपेषयेत् ॥
तद्गोलके क्षिपेद्वज्रं रुध्वा गजपुटे पचेत् ॥ ३४ ॥
एवं सप्तपुटैः पक्व एकैकेन मृतो भवेत् ॥

॥ वज्रमारणं ६ ॥

तालकासीससौराष्ट्र्यो ह्यपामार्गस्य भस्म च ॥ ३५ ॥
पिष्ट्वा कौलत्थकैः क्राथैस्तस्मिन्वज्रं सुतापितम् ॥
क्षिप्त्वा त्रिसप्तवाराणि म्रियते नात्र संशयः ॥ ३६ ॥

॥ वज्र मारणं ७ ॥

वैकान्तभस्मना सार्धं पेषयेदम्लवेतसम् ॥
तद्गोलके क्षिपेद्वज्रमन्धमूषागतं धमेत् ॥ ३७ ॥
सेचयेदश्वमूत्रेण पूर्वगोले पुनः क्षिपेत् ॥
रुध्वा ध्मातं पुनः सेच्यमेवं कुर्यात्त्रिसप्तकम् ॥ ३८ ॥
म्रियते नात्र सन्देहः सर्वकर्मसु योजयेत् ॥

॥ वज्रमारणं ८ ॥ ॥

उत्तरावारुणीक्षीरैः कान्तपाषाणजं शुभम् ॥ ३९ ॥
चूर्णं पिष्ट्वा तु तद्गोले वज्रं क्षिप्त्वा पचेदनु ॥
भूतैले गन्धतैले वा म्रियते नात्र संशयः ॥ ४० ॥

॥ वज्रमारणं ९ ॥

भूनागं गन्धकं चाथ नारीस्तन्येन पेषयेत् ॥
तद्गोलस्थं पचेद्वज्रं पूर्वतैले मृतं भवेत् ॥ ४१ ॥

॥ वज्रमारणं १० ॥

स्नुहीक्षीरेण विमलां पिष्ट्वा तद्गोलके क्षिपेत् ॥
वज्रं निरुध्य मूषां तां शुष्कां तीव्राग्निना धमेत् ॥ ४२ ॥
तप्तमश्वस्य मूत्रे तु क्षिप्त्वा वज्रं समाहरेत् ॥
इत्येवं सप्तधा कार्यं ततस्तालकमत्कुणाः ॥ ४३ ॥
कृत्वा गोलं क्षिपेत्तस्मिन्वज्रमूषां निरुध्य च ॥
धामितं पूर्ववत्सेच्यं सप्तवारैर्मृतं भवेत् ॥ ४४ ॥

॥ वज्रमारणं ११ ॥

वज्रं मत्कुणरक्तेषु क्षिप्त्वा लिप्त्वातपे क्षिपेत् ॥
शुष्कं लेप्यं पुनः शोष्यं यावत्सप्तदिनावधि ॥ ४५ ॥
विष्णुक्रान्तापेटकार्योर्द्रवैः सिंचेत् पुनः पुनः ॥
तप्तं तप्तं तु तद्वज्रं शतवारान्मृतं भवेत् ॥ ४६ ॥

॥ वज्रमारणं १२ ॥

गन्धकं चूर्णितं भाव्यं स्त्रीपुष्पेण तु सप्तधा ॥
पुनः स्त्रीरजसालोड्य तस्मिन्वज्रं सुतापितम् ॥ ४७ ॥
सेचयेत्तापयेदेवं मृतं स्यात्तु त्रिसप्तधा ॥

॥ वज्रौदनम् ॥ ( वज्रमृदूकरणं )

मातुलुङ्गगतं वज्रं रुध्वा बाह्ये मृदा लिपेत् ॥
पचेत् पुटे समुद्धृत्य तद्वच्छतपुटैः पचेत् ॥ ४८ ॥

नागवल्ल्या द्रवैर्लिप्तं[1] तत्पत्रेणैव वेष्टितम् ॥
जानुमध्यस्थितं यामं तद्वज्रं मृदुतां व्रजेत् ॥ ४९ ॥

॥ वज्रौदनं वज्रमृदूकरणं २ ॥

मातृवाहकजीवस्य मध्ये वज्रं विनिक्षिपेत् ॥
जम्बीरोदरगं वाऽथ दोलायन्त्रे दिनं पचेत् ॥ ५० ॥
कुलत्थकोद्रवक्वाथैस्त्रैफले वा कषायके ॥
अहोरात्रात् समुद्धृत्य जम्बीरे तु पुनः क्षिपेत् ॥ ५१ ॥
मातृवाहकजीवे वा क्षिप्त्वा पक्त्वा च पूर्ववत् ॥
पुनः क्षेप्यं पुनः पाच्यं त्रिदिनान्ते समुद्धरेत् ॥ ५२ ॥
बदरीवर्वनिभानामंकुराणि समाहरेत् ॥
छित्वा तद्गोलके वज्रं पूर्वरक्तं विनिक्षिपेत् ॥ ५३ ॥
अश्वत्थपत्रकैर्वेष्ट्यं तद्गोलं जानुमध्यगम् ॥
दिनं वा धारयेत् कक्षे मृदुर्भवति निश्चितम् ॥ ५४ ॥

॥ वज्रमृदूकरणं ३ ॥

पारदं तीक्ष्णचूर्णं च दिनमम्लेन मर्दयेत् ॥
तद्गोले निक्षिपेद्वज्रं सूत्रेणावेष्टयेद्बहिः ॥ ५५ ॥
नागवल्लीद्रवैश्चैव वेष्टितं धान्यराशिगम् ॥
मासान्ते तत्समुद्धृत्य नागवल्ल्या द्रवैर्लिपेत् ॥
तद्दलैर्वेष्टितं जानुमध्यस्थं मृदुतां व्रजेत् ॥ ५६ ॥

॥ वज्रमृदूकरणं ४ ॥

कान्तपाषाणवज्रं वा चूर्णं वा कान्तलोहजम् ॥ ५७ ॥
सस्तुतमल्लयोगेन दिनमेकं विमर्दयेत् ॥
तद्गोले निक्षिपेद्वज्रं निम्बकार्पासकोलजैः ॥ ५८ ॥
पत्रैः पिष्टैस्तु संवेष्ट्य नागवल्लीदलैस्ततः ॥
वेष्ट्यं तज्जानुमध्यस्थं दिनान्ते मृदुतां व्रजेत् ॥ ५९ ॥

१ मर्दं इति पाठान्तरम्

॥ वज्रमृदूकरणं ५ ॥

एरण्डवृक्षमध्ये तु नक्रकूले वा क्षिपेत्पविम् ॥
मासमात्रात्समुद्धृत्य जानुमध्ये तु पूर्ववत् ॥ ६० ॥
कोमलं जायते वज्रं दिनान्ते नाऽत्र संशयः ॥

॥ वज्रमृदूकरणं ६ ॥

वज्रं तित्तिरमांसेन वेष्टयेन्निक्षिपेन्मुखे ॥ ६१ ॥
अतिस्थूलस्य भेकस्य मुखं सूत्रेण वेष्टयेत् ॥
निखनेद्धस्तमात्रायां भूमौ मासात्समुद्धरेत् ॥ ६२ ॥
मण्डूकसंपुटे रुध्वा सम्यग्गजपुटे पचेत् ॥
तद्वज्रं पूर्वगोलस्थं जानुमध्ये गतं दिनम् ॥ ६३ ॥
भवेद्वज्रौदनं साक्षान्मार्यं पश्चाच्च योजयेत् ॥
सर्ववज्रौदनानां तु मारणं पूर्ववद्भवेत् ॥ ६४ ॥

॥ वैक्रान्तशोधनम् ॥

त्रिक्षारैः पंचलवणैर्वसामूत्राम्लकोद्रवैः ॥
मत्स्यपित्तैस्तैलघृतैः कुलत्थैः काञ्जिकान्वितैः ॥ ६५ ॥
सप्ताहं दोलकायन्त्रे व्याघ्रीकन्दगतं पचेत् ॥
सप्तवर्णं तु वैक्रान्तं शुद्धिमायाति निश्चितम् ॥ ६६ ॥

॥ उपरसानां शोधनम् ॥

जम्बीराणां द्रवे मग्नमातपे धारयेद्दिनम् ॥
शुध्यन्ति टङ्कणं शंखो वराटाञ्जनगैरिकम् ॥
कासीसं भूखगं चैव शुद्धं योगेषु योजयेत् ॥ ६७ ॥

॥ गन्धकशुद्धिः १ ॥

यामैकं गन्धकं मर्द्यं द्रवैर्निम्बाजगन्धयोः ॥
[1]शृंगीधत्तूरयोर्वाथ तिलपर्ण्याश्च वा द्रवैः ॥
तदादाय घृतैस्तुल्यं लोहपात्रे क्षणं पचेत् ॥ ६८ ॥
लध्वग्निना द्रुतं तद्वै अजाक्षीरे विनिक्षिपेत् ॥
इत्येवं सप्तधा कुर्याच्छुद्धिमायाति गन्धकम् ॥ ६९ ॥

१ भृंग. इ. पा.

॥ गंधकशोधनम् २ ॥

करञ्जैरण्डतैलं च छागीदुग्धं च भाण्डके ॥ ७० ॥
क्षिप्त्वा तस्य मुखं रुध्वा स्वच्छवस्त्रेण बुद्धिमान् ॥
गन्धकं धूर्तजैर्द्रावैर्दिनं भाव्यं विशोषयेत् ॥ ७१ ॥
तच्चूर्णं पूर्वभाण्डस्य वस्त्रोपरि निधारयेत् ॥
आच्छाद्य च शरावेण पृष्ठे देयं पुटं लघु ॥ ७२ ॥
द्रुतं गन्धं समादाय भाव्यं धत्तूरजैर्द्रवैः ॥
तद्वद्द्राव्यं पुनर्भाव्यं द्रावयेच्च पुनस्ततः ॥ ७३ ॥
आदाय मत्स्यपित्तेन सप्तधा भाव्यमातपे ॥
ततः कोशातकीबीजचूर्णेन सह पेषयेत् ॥ ७४ ॥
भावयेद्भृङ्गजैर्द्रावैः सप्ताहमातपे खरे ॥
तोयेन क्षालितं शोष्यं ततो मृद्वग्निना क्षणम् ॥ ७५ ॥
घृताक्ते लोहपात्रे तु द्रावितं ढालयेत्ततः ॥
भृङ्गराजद्रवान्तस्थं सम्यक् शुद्धं भवेत्तु तत् ॥ ७६ ॥

॥ शुद्धगधंकस्य तैलपातनविधिः, गंधनिवारणं च ॥

अथ शुद्धस्य गन्धस्य तैलपातनमुच्यते ॥
अम्लपर्णी देवदाली दाडिमं मातुलुङ्गकम् ॥ ७७ ॥
नारङ्गं वा यथालाभं द्रवमेकस्य चाहरेत् ॥
गन्धकस्य तु पादांशं टङ्कणं द्रवसंयुतम् ॥ ७८ ॥
एताभ्यां गन्धकं भाव्यं घर्मे वारत्रयं पुनः ॥
धत्तूरस्तुलसी कृष्णा लशुनं देवदालिका ॥ ७९ ॥
शिग्रुमूलं काकमाची कर्पूरं शङ्खपुष्पिका ॥
कृष्णागुरु च कस्तूरी वन्ध्याककर्कोटकी समम् ॥ ८० ॥
मातुलुङ्गरसैः पिष्ट्वा क्षिपेदेरण्डतैलके ॥
अनेन लोहपात्रस्थं भावयेत्पूर्वगन्धकम् ॥ ८१ ॥
त्रिवारं क्षौद्रतुल्यं तज्जायते गन्धवर्जितम् ॥
इदं गन्धकतैलं स्यात्तत्तद्योगेषु योजयेत् ॥ ८२ ॥

॥ हरितालशुद्धिः १ ॥

स [१]चूर्णेणारनालेन दोलायन्त्रेण तालकम् ॥
दिनं पक्कं विचूर्ण्याथ भाव्यं कूष्माण्डजैर्द्रवैः ॥ ८३ ॥
शोष्यं पेष्यं पुनर्भाव्यं शतवारं विशुद्धये ॥

॥ हरितालशुद्धिः २ ॥

तालकं कणशः कृत्वा तालात्पादांशटङ्कणम् ॥ ८४ ॥
द्वयं जम्बीरजैर्द्रावैः क्षालयेत्काञ्जिकैस्तथा ॥
तच्छुष्कं पोटलीबद्धं सचूर्णे काञ्जिके पचेत् ॥ ८५ ॥
द्विदिनं दोलकायन्त्रे तद्वत्कूष्माण्डजैर्द्रवैः ॥
पाचितं शुद्धिमायाति तालं सर्वत्र योजयेत् ॥ ८६ ॥

॥ विमलशुद्धिः ॥

सुवर्णवर्णं विमलं ताप्यं वा कणशः कृतम् ॥
पुनर्नवायाः कल्कस्थं कौलत्थे स्वेदयेज्जले ॥ ८७ ॥
सैन्धवैर्बीजपूराम्लैर्युक्तं वा पोटलीकृतम् ॥
दोलायन्त्रे दिनं स्वेद्यं शुद्धिमायाति निश्चितम् ॥ ८८ ॥

॥ रसकशुद्धिः ॥

रजस्वलारजोमूत्रै रसकं भावयेद्दिनम् ॥
तैरेव दिनमेकं तु मर्दयेच्छुद्धिमाप्नुयात् ॥ ८९ ॥
पुनर्नवामेघनादकपिजम्बीरतिन्दुकैः ॥
अगस्तिपुष्पकुमुदयवचिञ्चाम्लवेतसैः ॥ ९० ॥
यवसूरणभूधात्रीमाण्डूकीकरवीरकैः ॥
कारवल्लीक्षीरकन्दरक्तोत्पलशमीयनैः ॥ ९१ ॥
मेषशृंग्या चोष्ट्रवसाशङ्खवाकणिटङ्कणैः ॥
तैलमत्स्यवसाव्योषैर्द्रवैरेतैः सकाञ्जिकैः ॥ ९२ ॥

---

१ सचूर्के इ. पा.

एतैः समस्तैर्व्यस्तैर्वा दोलायन्त्रे दिनत्रयम् ॥
अभ्रपत्राण्युपरसान् शुद्धिहेतोस्तु पाचयेत् ॥ ९३ ॥
सूर्यावर्तो वज्रकन्दः कदली देवदालिका ॥
शिग्रुः कोशातकी वन्ध्या काकमाची च वालुकम् ॥ ९४ ॥
आसामेकरसेनैव त्रिक्षारपटुपञ्चकम् ॥
भावयेदम्लवर्गेण तीव्रघर्मे दिनावधि ॥ ९५ ॥
एतत्कल्केन संलेप्यमभ्रकं वज्रमाक्षिकम् ॥
वैक्रांतं सस्यकं तालं कान्तपाषाणमञ्जनम् ॥ ९६ ॥
विमलां च शिलां तुत्थमन्यानुपरसांस्तथा ॥
दोलायन्त्रे सारनाले पूर्वकल्कयुते पचेत् ॥
तीव्रानले दिनैकेन शुद्धिमायान्ति तानि वै ॥ ९७ ॥

॥ धान्याभ्रकरणम् ॥

शुद्धमभ्रं भिन्नपत्रं कृत्वा व्रीहियुते दृढे ॥
वस्त्रे बध्वा सारनाले भाण्डमध्ये विमर्दयेत् ॥ ९८ ॥
हस्ताभ्यां स्वयमायाति यावदम्लान्तरे तु तत् ॥
द्रवं त्यक्त्वा तु तच्छोष्यं दिनं धान्याभ्रकं भवेत् ॥ ९९ ॥

॥ अभ्रक भस्म १ ॥

एतद्धान्याभ्रकं मर्द्यं भानुदुग्धैर्दिनावधि ॥
कृत्वा पूपं भानुपत्रैर्वेष्टितं पाचयेत्पुटे ॥ १०० ॥
इत्येवं दशधा पाच्यं दुग्धैर्भाव्यं पुनः पुनः ॥
ततो वटजटाक्वाथैर्मर्द्य दशपुटैः पचेत् ॥ १०१ ॥
सघृतैर्माहिषीक्षीरैर्मर्द्य देयं पुटत्रयम् ॥
निश्चन्द्रं जायते ह्यभ्रं योजनीयं रसायने ॥ १०२ ॥

॥ अभ्रक भस्म २ ॥

पुनर्नवाद्यौषधानि ख्यातानि ह्यभ्रशोधने ॥ १०३ ॥
धान्याभ्रकं तु तैरेव त्रिदिनं तु पुटे पचेत् ॥
पूर्ववत्क्रमयोगेन म्रियते पंचभिः पुटैः ॥ १०४ ॥

॥ सर्वधातु शुद्धिः ॥

तैले तक्रे गवां मूत्रे काञ्जिके रविदुग्धके ॥
कुलत्थानां कषाये च जम्बीराणां द्रवे तथा ॥ १०५ ॥
तप्त्वा तप्त्वा निषिञ्चेत एकैकस्मिंस्तु सप्तधा ॥
स्वर्णादिलोहपत्राणि शुद्धिमायान्ति निश्चितम् ॥ १०६ ॥
द्राविते नागवङ्गे च पचेत्तद्विशुद्धये ॥
त्रिक्षारं पंचलवणं जम्बीराम्लेन सप्तधा ॥ १०७ ॥
भावयेदातपे तीव्रे तत्कल्केन विलेप्य च ॥
घोषारताम्रपत्राणां शुद्ध्यै गजपुटे पचेत् ॥ १०८ ॥

॥ नागभस्म ॥

लोहपात्रे पचेन्नागं तुल्यं यावद्द्रुतं भवेत् ॥
चाल्यं पलाशदण्डेन भस्मीभूतं समुद्धरेत् ॥ १०९ ॥
भस्मतुल्यां शिलां तस्मिन्क्षिप्त्वा चाम्लेन केनचित् ॥
पेषयेद्याममात्रं तु रुद्ध्वा गजपुटे पचेत् ॥ ११० ॥
स्वाङ्गशीतं पुनः पिष्ट्वा षिडात्र्यंशशिलायुतम् ॥
अम्लेन याममात्रं च रुद्ध्वा पचेच्च पूर्ववत् ॥
एवं षष्टिपुटैः पक्वो मृतो भवति पन्नगः ॥ १११ ॥

॥ लोहभस्म ॥

नारीस्तन्येन संपिष्टं हिङ्गुलं पलपंचकम् ॥ ११२ ॥
तेन लोहस्य पत्राणि लेपयेत् पलपंचकम् ॥
रुद्ध्वा गजपुटे पच्यात् कषायैस्त्रैफलैः पुनः ॥ ११३ ॥
जम्बीरैरारनालैर्वा त्रिंशांशादरदेन च ॥
पिष्ट्वा रुद्ध्वा पुटेल्लोहं तद्वत्पाच्यं पुनः पुनः ॥ ११४ ॥
चत्वारिंशत्पुटैरेव तीक्ष्णं कान्तं च मुण्डकम् ॥
म्रियते नात्र संदेहो दत्त्वा दत्त्वैव हिङ्गुलम् ॥ ११५ ॥

॥ वंगभस्म ॥

लोहपात्रे द्रुते वंगे पादांशं तालकं क्षिपेत् ॥
चाल्यमश्वत्थदण्डेन जातं भस्म समुद्धरेत् ॥ ११६ ॥
तद्भस्म हरितालं तु तुल्यमम्लेन मर्दयेत् ॥
पलाशकद्रवैर्वाऽथ यामान्ते चोद्धृतं पुटेत् ॥ ११७ ॥
उद्धृत्य दशमांशेन तालेन सह मर्दयेत् ॥
पूर्वद्रवैस्तु यामैकं रुध्वा गजपुटे पचेत् ॥
चत्वारिंशत्पुटैरेवं पक्वं स्यान्मृतवङ्गकम् ॥ ११८ ॥

॥ ताम्रभस्म ॥

कण्टवेधीकृतं ताम्रपत्रं तुल्यांशगन्धकैः ॥ ११९ ॥
अम्लपिष्टैः प्रलिप्याथ रुध्वा गजपुटे पचेत् ॥
उद्धृत्य चूर्णयेत्तस्मिन् पादांशं गन्धकं क्षिपेत् ॥ १२० ॥
जम्बीरैरारनालैर्वा पिष्ट्वा रुध्वा पुटेत् पुनः ॥
एवं चतुःपुटैः पच्याद्गन्धो देयः पुटे पुटे ॥ १२१ ॥
मातुलुङ्गद्रवैरेवं पुटमेकं प्रदापयेत् ॥
सितशर्करया पंचपुटं देयं मृतं भवेत् ॥ १२२ ॥

॥ रौप्यभस्म ॥

माक्षिकेनाम्लपिष्टेन तत्तुल्यं तारपत्रकम् ॥
लिप्त्वा रुध्वा पुटे पक्त्वा समुद्धृत्य विचूर्णयेत् ॥ १२३ ॥
कणामाक्षिकसिंधूत्थभूधात्र्यश्च समं समम् ॥
पूर्वचूर्णेन तुल्यांशमिदमम्लेन मर्दयेत् ॥ १२४ ॥
रुध्वा गजपुटे पच्यात्तैरेवं मर्दयेत्पुटेत् ॥
एवं सप्तपुटैः पक्वं तारं भस्मत्वमाप्नुयात् ॥ १२५ ॥

॥ सुवर्णभस्म ॥

मृतं नागं स्नुहीक्षीरैरथवाम्लेन केनचित् ॥
पिष्ट्वा तेन समांशेन स्वर्णपत्राणि लेपयेत् ॥ १२६ ॥

रुध्वा गजपुटे पक्त्वा समुद्धृत्य विचूर्णयेत् ।
तस्मिन्नेवं मृतं नागमष्टमांशेन लेपयेत् ॥१२७॥
यामैकं मर्दयेदम्लै रुध्वा गजपुटे पचेत् ।
एवमष्टपुटैः पक्वं मृतं भवति हाटकम्

॥ कांस्य-पित्तल भस्म ॥

आरे घोषे प्रकर्तव्यं ताम्रवन्मारणं परम् ॥१२८॥
विविधपरमयोगैर्युक्तिर्युक्तैः प्रसिद्धै-
रनुभवपथदृष्टैः शोधनं मारणं च ।
पविबलिगगनानां सर्वलोहे विशेपाद्-
गदितमिह हितार्थं वार्तिकानां विभूत्यै ॥१२९॥

इतिश्री पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके वज्रशोधनादि धातुमारणं नाम तृतीयोपदेशः ॥ ३ ॥

———:o:———

# ॥ अथ श्री ऋद्धिखंडे चतुर्थोपदेशः ॥

सम्यक् सिद्धमतान्तरैः समुचितैः सत्संप्रदायैः शुभैः
ख्यातैर्गन्धकजारणादिविविधैर्योगैः सुसिद्धैः क्रमात् ॥
यद्दृष्टं सुलभं सुवर्णकरणं तारस्य संरंजनात् ।
सत्यं सज्जनरक्षणातुरतया संतन्यते तत्त्वतः ॥१॥

॥ गन्धपिष्टिः ॥

दशनिष्कं शुद्धसूतं निष्कैकं शुद्धगन्धकम् ।
स्तोकं स्तोकं क्षिपेत्खल्वे मर्दकेन शनैः शनैः ॥२॥
कुट्टनाज्जायते पिष्टिः सेयं गन्धकपिष्टिका ।

स्वर्णपिष्टिः

भागत्रयं शुद्धसूतं भागैकं शुद्धहाटकम् ॥३॥
अम्लेन मर्दयेद्यामं ख्यातेयं स्वर्णपिष्टिका ।

॥ पडगुणगंधकजारणं ॥

गन्धपिष्टिं हेमपिष्ट्या समया वेष्टयेद्बहिः ॥४॥

वस्त्रेण वेष्टयेद्गाढं सूताख्ये लोहसंपुटे ।
निधाय पोटलीमध्ये सर्वतुल्यं च गन्धकम् ॥५॥
क्षिप्त्वा निरोधयेत्सन्धिं मृल्लोणेन च रोधयेत् ।
भूधराख्ये पुटे पक्त्वा जीर्णे गन्धं पुनः क्षिपेत् ॥६॥
षड्गुणे गन्धके जीर्णे शनैर्वस्त्रं निवारयेत् ।

॥ शतगुणगंधकजारणं ॥

पुनः पुनः समं गन्धं दत्वा जार्यं शनैः शनैः ॥७॥
निःशेषं नैव कर्तव्यं प्रमादाद्याति सूतकः ।
एवं शतगुणे जीर्णे यन्त्रादुद्धृत्य पिष्टिकाम् ॥८॥

॥ सिद्धयोगेन वेधः ॥

तत्तुल्ये संपुटे हेम्नि रुध्वा बाह्ये च वेष्टयेत् ।
कुमारीद्रवपिष्टेन काचेनाङ्गुलमात्रकम् ॥९॥
तद्बहिष्टंकणेनैव लोणमृत्तिकया ततः ।
वेष्ट्यमंगुलितैलेन सूर्यतापेन शोषितम् ॥१०॥
कोष्ठीयन्त्रे गतं धाम्यं वङ्कनाले दृढाग्निना ।
तत्खोटं जायते दिव्यं सिन्दूरारुणसंनिभम् ॥११॥
तेन वेधस्तु तारस्य द्रुतस्य शतभागतः ।
देयः संजायते स्वर्णं सिद्धयोग उदाहृतः ॥१२॥

॥ गन्धकपिष्टिः १ ॥

गन्धकं शोधितं चूर्ण्यं सप्तधा कनकद्रवैः ।
भावयेदातपे तद्वन्नारीणां रजसा पुनः ॥१३॥
तद् गन्धं कर्षमेकं तु नरपित्तेन लोलितम् ।
पलैकं पारदं शुद्धमातपे खर्परे क्षिपेत् ॥१४॥
तत्पृष्ठे लोलितं गन्धं क्षिप्त्वाङ्गुष्टेन मर्दयेत् ।
पिष्टिका जायते दिव्या सर्वकामफलप्रदा ॥१५॥

॥ गंधकपिष्टिः २ ॥

तिलपर्णीरसेनैव सप्तधा शुद्धगंधकम् ।
भावयेत्पेषयेत्तच्च छायाशुष्कं पुनः पुनः ॥१६॥

शुद्धं सूतं पलैकं च मूषायां हि निधापयेत् ।
शुद्धस्वर्णस्य गुलिकां निष्कमात्रां विनिक्षिपेत् ॥१७॥
तां मूषां वालुकायन्त्रे स्थापयेत्पूर्वगन्धकम् ।
त्रुटिशस्त्रुटिशो दत्वा चुल्लयां मन्दाग्निना पचेत् ॥१८॥
पादांशे गन्धके जीर्णे जायते गन्धपिष्टिका ।
गन्धपिष्टिः पृथग्ग्राह्या स्वर्णस्य गुलिकां विना ॥१९॥

॥ गन्धकपिष्टिः ३ ॥

छायायां गन्धकं भाव्यं शतधा मर्कटीद्रवैः ।
घर्मे मृत्खर्परे सूतं क्षिपेत्किंचिच्च गन्धकम् ॥२०॥
मर्कटीद्रवसंयुक्तं जीर्णे गन्धे द्रवं पुनः ।
देयं पादांशकं यावद्गन्धकं सद्रवं क्रमात् ॥२१॥
जायते पिष्टिका दिव्या सर्वकामफलप्रदा ।

॥ गन्धक पिष्टिः ४ ॥

गन्धकं सूक्ष्मचूर्णं तु काञ्जिकैः क्षालयेत्त्रिधा ॥२२॥
त्रिधा जम्बीरजैर्द्रावैर्हंसपाद्याश्च सप्तधा ।
कर्पूरं च पृथग्भाव्यं श्वेताद्रिकर्णिकाद्रवैः ॥२३॥
आतपे त्रीणि वाराणि ततो जारणमारभेत् ।
द्विगुञ्जामात्रकर्पूरैर्यन्त्रगर्भे प्रलेपयेत् ॥२४॥
तद्गर्भे भावितं गन्धं सार्धनिष्कं प्रदापयेत् ।
शुद्धसूतं पलं चार्धं कर्पूरं पूर्वतुल्यकम् ॥२५॥
पूर्वतुल्यं ततो गन्धं क्रमेणाथ प्रदापयेत् ।
श्वेताद्रिकर्णिकामूलं गोमूत्रेण प्रपेषयेत् ॥२६॥
आच्छाद्य तेन कल्केन शरावेण निरुध्य च ।
पाचयेन्नलिकायन्त्रे दिनान्ते तं समुद्धरेत् ॥२७॥
कर्पूरादि पुनर्देयं तद्वज्जार्यं दिनावधि ।
इत्येवं तु पुनः कुर्याज्जायते गन्धपिष्टिका ॥२८॥

॥ गंधक पिष्टिः ५ ॥

पारदस्य पलैकं तु कर्षैकं शुद्धगन्धकम् ।
स्निग्धखल्वे कराङ्गुल्या देवदालीद्रवे प्लुतम् ॥२९॥

मर्दयेदातपे तीव्रे जायते गन्धपिष्टिका ।

॥ गंधक पिष्टिः ६ ॥

शुद्धसूतं पलैकं तु कर्षार्धं शुद्धगन्धकम् ॥३०॥
निधाय ताम्रखल्वे तु तदधोग्निं मृदुं क्षिपेत् ।
कराङ्गुष्ठेन संमर्द्य यामाद्भवति पिष्टिका ॥३१॥

॥ अथ गन्धकपिष्टिनां स्तम्भनमाह ॥

॥ गन्धकपिष्टिस्तंभनं ॥

तिक्तकोषातकीबीजं चाण्डालीकन्द एव च ।
नारीस्तन्येन संपिष्य लेपयेद्गन्धपिष्टिकाम् ॥३२॥
निक्षिपेत्सूरणे कन्दे क्षीरकन्दोदरे तथा ।
वन्ध्याकर्कोटकीवज्रकन्दे वा कुडुहुंजिके ॥३३॥
मुखं कन्दस्य मज्जाभी रुध्वा कन्दंमृदा लिपेत् ।
पुटयेद्भूधरे यन्त्रे करीषाग्नौ दिनावधि ॥३४॥
ऊर्ध्वाधः परिवर्तेन यथा कन्दो न दह्यते ।
ततः पिष्टीं समुद्धृत्य स्तम्भिता जायते ध्रुवम् ॥३५॥

॥ स्तम्भित गंधक पिष्टि जारणं ॥

अथास्या जारणा कार्या स्तनाख्ये लोहसंपुटे ।
निधाय जारयेद्गन्धं तुल्यं तुल्यं तु भूधरे ॥३६॥
जीर्णे गन्धे पुनर्देयं यन्त्रे जार्यं च पूर्ववत् ।
एवं शतगुणं जार्यं जीर्णे यन्त्रात्समुद्धरेत् ॥३७॥
सर्वासां गंधपिष्टीनां रञ्जनं स्यात्तु जारणात् ।

॥ अथ जारितानां गन्धकपिष्टीनां मारणमाह ॥

॥ गन्धक पिष्टि मारणं ॥

दिव्यौषधगणद्रावैः पिष्टिः खल्वे विमर्दयेत् ।
दिनान्ते गोलकं कृत्वा बीजैर्दिव्यगणोद्भवैः ॥३८॥
लेपयेद्वज्रमूषां तु गोलं तत्र निरोधयेत् ॥
दिनैकं भूधरे पच्यादूर्ध्वाधः परिवर्तयेत् ॥३९॥
समुद्धृत्य पुनर्मर्द्यं पूर्वद्रावैस्तु पूर्ववत् ।

पुटान्तं कारयेदेवं दशवारं पुनः पुनः ॥४०॥
म्रियते नात्र संदेहो गन्धपिष्टयस्ततः पुनः ।

॥ गन्धपिष्ट्या तारवेधः १ ॥

मृतपिष्टिपलैकं तु पेषयेद्वासकद्रवैः ॥४१॥
तत्कल्कैर्नागपत्रं तु लेपयित्वा पलाष्टकम् ।
छायाशुष्कं न्यसेत्पिण्डे वासापत्रसमुद्भवे ॥४२॥
तं पिण्डं संपुटे रुध्वा पुटेदारण्यकोत्पलैः ।
समुध्धृत्य पुनर्देया पलैका मृतपिष्टिका ॥४३॥
वासाद्रावैर्दिनं मर्द्य तं गोलं वेष्टयेत्पुनः ।
वासापत्रोत्थपिण्डेन रुध्वा गजपुटे पचेत् ॥४४॥
एवं पुनः पुनः कुर्याद्रक्तवर्णं मृतं भवेत् ।
तन्नागं पलमात्रं तु यामैकं वासकद्रवैः ॥४५॥
मर्दितं लेपयेत्तेन ताम्रपत्रं पलाष्टकम् ।
दिनैकं पाचनायन्त्रे पाचयेन्म्रियते ध्रुवम् ॥४६॥
षोडशांशेन तेनैव तारे वेधं प्रदापयेत् ।
तत्तारं जायते स्वर्णं जाम्बूनदसमप्रभम् ॥४७॥
यया कया गन्धपिष्ट्या स्तम्भनं जारणं विना ।
पूर्ववत्क्रमयोगेन दिव्यं भवति काञ्चनम् ॥४८॥

॥ तारवेधः २ ॥

अर्जुनस्य त्वचो भस्म वासाभस्म समं समम् ।
गृहकन्याद्रवैर्मर्द्य दिनैकं तेन लेपयेत् ॥४९॥
कण्टवेध्यं नागपत्रं रुध्वा लघुपुटे पचेत् ।
उध्धृत्य मर्दयेद्यामं पूर्वद्रावैः सभस्मकैः ॥५०॥
रुध्वा गजपुटे पक्त्वा स्वाङ्गशीतं समुद्धरेत् ।
एवं शतपुटैः पाच्यं भस्म द्रावैश्च मर्दयेत् ॥५१॥
तेनैव तारपत्राणि मधुलिप्तानि लेपयेत् ।
रुध्वा गजपुटे पक्त्वा पुनर्लिप्त्वा पुटे पचेत् ॥५२॥
इत्येवं तु त्रिधा कुर्यात्तारमायाति काञ्चनम् ।

॥ तारवेधः ३ ॥

लोहपात्रे द्रुते नागे चूर्णितं रसकं समम् ॥५३॥
क्षिप्त्वा चुल्ल्यां पचेद्यामं चाल्यं पाषाणमुष्टिना ।
यामांते हिङ्गुलं क्षेप्यं चूर्णितं नागतुल्यकम् । ॥५४॥
सुसूक्ष्मं मर्दयेत्तावत् दृढं पाषाणमुष्टिना ॥
पचेच्चण्डाग्निना तावद्दिनानामेकविंशतिम् ॥५५॥
जायते कुङ्कुमाभं तु तारं तेनैव वेधयेत् ।
चतुःषष्टितमांशेन दिव्यं भवति काञ्चनम् ॥५६॥

॥ तारवेधः ४ ॥

द्रावयेत्खर्परे नागं पादांशं तत्र निक्षिपेत् ।
चिञ्चाश्वत्थत्वचः क्षारं लोहदर्व्या विमर्दयेत् ॥५७॥
यामान्ते तत्समुद्धृत्य वज्रीक्षीरैर्दिनावधि ।
मर्द्यं खल्वे समुध्धृत्य मृद्भाण्डान्तर्निरोधयेत् ॥ ॥५८॥
पचेद्रात्रौ चतुर्यामं चुल्ल्यां चण्डाग्निना पुनः ।
उद्धृत्य मर्दयेत्खल्वे वज्रीक्षीरैर्दिनावधि ॥५९॥
रात्रौ पाच्यं दिवा मर्द्यं यावत्षण्मासमेव च ।
यथा न पतते तस्मिञ्जलं धूलिस्तु रक्षयेत् ॥
सहस्रांशे धृते तारे वेधे दत्ते सुकांचनम् ॥६०॥

॥ तारवेधः ५ ॥

शिलागन्धककर्पूरकुङ्कुमं मर्दयेत्समम् ।
जम्बीरोत्थद्रवैर्यामं तत्समं नागपत्रकम् ॥६१॥
लिप्त्वा लिप्त्वा पुटैः पच्याद्यावच्छष्टिपुटी भवेत् ॥६२॥
तन्नागं विद्युदाभासं जायते तेन वेधयेत् ।
चतुःषष्टितमांशेन तारमायाति काञ्चनम्

॥ तारवेधः ६ ॥

तीक्ष्णं शुल्बं नागवंगौ द्रुतं नागं तु तुत्थकम् ।
चूर्णितं भागमैकेकं द्वौभागौ हेममाक्षिकम् ॥६३॥
वज्रमूषागतं रुध्वा ध्मातं खोटं सुचूर्णितम् ।
सिद्धचूर्णेन संयुक्तं तारमायाति काञ्चनम् ॥६४॥

॥ ताराऋिष्टं १ ॥

शुल्बचूर्णं तीक्ष्णचूर्णं तुल्यं रुध्वा धमेत् हठात् ।
तत्खोटं सिद्धचूर्णं च मर्द्यं पाच्यं च पूर्ववत् ॥
तेनैव मधुयुक्तेन तारपत्राणि लेपयेत् ।
रुध्वा गजपुटे पच्यादेवं वारत्रयं कृते ॥
पीतवर्णं भवेत्तु ताराऋिष्टं निगद्यते ।

॥ ताराऋिष्टं २ ॥

वंगनागसमं कांतमथवा ताम्रनागकम् ॥
माक्षिकं शुल्बतीक्ष्णं वा शुल्बनागं सवंगकम् ।
एते योगास्तु चत्वारः पृथक् चूर्णानि कारयेत् ॥
पृथग्ध्मातानि खोटानि सिद्धचूर्णयुतानि च ।
मर्दनादिपुटान्तानि ताराऋिष्टकराणि वै ॥
पूर्ववल्लेपयोगेन प्रत्येकेन तु कारयेत् ।
ताराऋिष्टस्य तस्यैव स्वर्णीकरणमुच्यते ॥

॥ ताराऋिष्टस्य वेधः १ ॥

शुद्धवैक्रान्तभागैकं किंवा वैक्रांतसत्वकम् ।
नागचूर्णं च भागैकमंधमूषागतं धमेत् ॥
सिद्धचूर्णेन संयुक्तं मर्दनादिपुटान्तकम् ।
कर्तव्यं पूर्ववत्प्राज्ञैस्तामादाय विमर्दयेत् ॥
मधुना याममात्रं तु तेन लेपं तु कारयेत् ।
शतांशेन तु पत्राणां ताराऋिष्टस्य यत्नतः ॥
रुध्वा गजपुटे पच्याद्द् दिव्यं भवति काञ्चनम् ।

॥ तारवेधः ७ ॥

मूलपत्रफलं बिल्वाच्छाकवृक्षाच्च तत्रयम् ।
शिग्रुमूलं रसं चैतन्मर्दयेत्किंशुकद्रवैः ॥
अनेन नागचूर्णं तु मर्द्यं मर्द्यं पुटे पचेत् ।
एवं शतपुटैः पक्वं जायते पद्मरागवत् ॥
तेनैव तारपत्राणि मधुलिप्तानि लेपयेत् ।
रुध्वा गजपुटे पच्यादेवं वारत्रये कृते ॥
तत्तारं जायते दिव्यं जाम्बूनदसमप्रभम्

॥ तारारिष्टस्य वेधः २ ॥

राजावर्तं हिंगुलकं कंकुष्ठं च प्रवालकम् ॥
प्रत्येकं कर्षमात्रं स्याद्रसकस्य पलं तथा ।
सूक्ष्मचूर्णं कृतं सर्वं सिद्धचूर्णेन संयुतम् ॥
अंधमूषागतं ध्मातं मर्दनादि पुटान्तकम् ।
पूर्ववत् कारयेत्पश्चान्मधुना सह मिश्रयेत् ॥
तारारिष्टस्य पत्राणि लेपयित्वा पुटे पचेत् ।
एवं वारत्रयं कुर्याद् दिव्यं भवति काञ्चनम् ॥

॥ तारारिष्टस्य वेधः ३ ॥

माक्षिकं दरदं तुत्थं राजावर्तं प्रवालकम् ।
एतानि समभागानि द्विभागं रसकं भवेत् ॥
मेषीक्षीरेण तत्सर्वं दिनमेकं विमर्दयेत् ।
छायाशुष्कं तु तत्कृत्वा तुल्यांशं मित्रपंचकम् ॥
दत्वा तु मर्दयेत् खल्वे तारारिष्टं तु लेपयेत् ।
प्रथमं समकल्केन रुध्वा गजपुटे पचेत् ॥
अर्धकल्केन लेप्याथ पादकल्केन वा पुनः ।
एवं पुटत्रयं देयं दिव्यं भवति काञ्चनम् ॥

॥ तारारिष्टस्य वेधः ४ ॥

रसकं नागसंतुल्यं रुध्वा खोटं प्रकारयेत् ।
सिद्धचूर्णेन संयुक्तं पुटांतं पूर्ववत् कृतम् ॥
तेनैव मधुनोक्तेन तारारिष्टं प्रलेपयेत् ।
रुध्वा रुध्वा पुटे पच्यात् त्रिधा भवति काञ्चनम् ॥

॥ नागभस्मना तारवेधः ॥

गंधकं तालकंशुल्बं समहिंगुलपेषितम् ।
मातुलुङ्गद्रवैः सार्धं नागपत्राणि तेन वै ॥
लिप्त्वा रुध्वा पुटे पच्यात्पुनस्तेनैव मर्दयेत् ।
एवं षष्टिपुटैः पक्वो नागः स्यात्कुङ्कुमप्रभः ॥
तेन तारस्य पत्राणि मधुलिप्तानि लेपयेत् ।
रुध्वा तीव्राग्निना धाम्यमेवं वारत्रये कृते ॥

तत्तारं जायते दिव्यं जाम्बूनदसमप्रभम् ।

॥ तारवेधः ८ ॥

लाङ्गली गिरिकर्ण्यग्निः करवीरजमूलकम् ।
सौवीरं टङ्कणं स्तन्यैः पिष्ट्वा पिण्डं प्रकल्पयेत् ॥९०॥
चतुर्थी विमला शुद्धा तेष्वेका पलमात्रकम् ।
द्विपलं पारदं शुद्धं शुद्धं हेमपलत्रयम् ॥९१॥
यामेकं मर्दयेत् सर्वं पूर्वपिण्डोदरे क्षिपेत् ।
तत्पिण्डं वज्रमूषायां रुध्वा धाम्यं हठाग्निना ।
तत्खोटं शतमांशेन द्रुतं नागं तु वेधयेत् ॥९२॥
तन्नागेन शतांशेन द्रुतं शुल्वं तु वेधयेत् ।
तत्खोटं शतमांशेन द्रुतं नागं तु वेधयेत् ।
जायते कनकं दिव्यं देवाभरणमुत्तमम् ॥९३॥

॥ तारवेधः ९ ॥

पारदं कुङ्कुमं गन्धं स्त्रीपुष्पेण दिनावधि ।
मर्दयेत्तुल्यतुल्यांशं तेनकल्केन साधयेत् ॥९४॥
शुद्धानि तारपत्राणि लिप्त्वा रुध्वा धमेद्धठात् ।
पत्रं कृत्वा पुनर्लेप्यं रुध्वा धाम्यं च पूर्ववत् ॥९५॥
इत्येवं सप्तधा कुर्याल्लेपनं द्रावणं क्रमात् ।
ततस्तस्यैव पत्राणि तेन कल्केन लेपयेत् ॥९६॥
उद्घाटं द्रावयेत्तं च द्रुतमाज्ये विनिक्षिपेत् ।
सप्ताहं धारयेत्तस्मिन्दिव्यं भवति काञ्चनम् ॥९७॥

॥ तारवेधः १० ॥

कुङ्कुमं गन्धकं सूतं मञ्जिष्ठा तत्समं समम् ।
शाकवृक्षफलद्रावैः सुपक्वैर्मर्दयेद्दिनम् ॥९८॥
तेन तारस्य पत्राणि प्रलिप्तानि विशोषयेत् ।
आवर्त्य ढालयेत्तस्मिंस्तेन कल्केन भावितम् ॥९९॥
एवं पुनः पुनः कुर्यादेकविंशतिवारकम् ।
तत्तारं जायते स्वर्णं सम्यग्द्वादशवर्णकम् ॥१००॥

॥ तारवेधः ११ ॥

पारदं कान्तपाषाणं गन्धकं रक्तचन्दनम् ।

रुद्रन्तीद्रवसंयुक्तं दिनमेकं विमर्दयेत् ॥१०१॥
तेन तारस्य पत्राणि प्रविलिप्तानि शोषयेत् ।
धामयेदन्धमूषायामेवं कुर्यात्रिसप्तधा ॥१०२॥
शाकवृक्षस्य मूलं तु भाव्यं तत्पत्रजैर्द्रवैः ।
रक्ताश्वमारजैश्चैव पृथग्भाव्यं त्रिधा त्रिधा ॥१०३॥
अनेन पूर्वतारस्य द्रुतस्य प्रतिवापनम् ।
दापयेत्सप्तवारं तु दिव्यं भवति काञ्चनम् ॥१०४॥

॥ तारवेधः १२ ॥

गन्धकं गन्धमूली च रविदुग्धेन मर्दयेत् ।
मृण्मये संपुटे रुध्वा मासं भूमौ विनिक्षिपेत् ॥१०५॥
उध्धृत्य तेन तारस्य पत्रलेपं तु कारयेत् ।
पूर्वतारे द्रुते देयः प्रतिवापः पुनः पुनः ॥१०६॥
सप्तविंशतिमे वापे तत्तारं काञ्चनं भवेत् ।

॥ सिद्धचूर्णम् ॥

शुद्धसूतसमं गंधं खल्वे मर्द्यं दिनावधि ॥१०७॥
जायते कज्जली श्रेष्ठा सर्वकार्यकरी शुभा ।
कज्जली टङ्कणं ताप्यं प्रत्येकं कर्षमात्रकम् ॥१०८॥
कर्षद्वयं शुद्धगन्धं यामं सर्वं विचूर्णयेत् ।
सिद्धचूर्णमिदं ख्यातं भवेत् पादादिकं पलम् ॥१०९॥
यत्र यत्र मिलत्येतत्तत्र चूर्णं पलं पलं ।
योजयेल्लोहवादेषु तदिदानीं निगद्यते ॥११०॥

॥ तारंरंजनं ॥

ताम्रतीक्ष्णारकान्तानां चूर्णमेकस्य चाहरेत् ।
यथा लोहे पलैकं तु सिद्धचूर्णेन संयुतम् ॥१११॥
वज्रमूषागतं रुध्वा ध्मातं खोटं भवेत्तु तत् ।
तुल्यैर्भूनागजीवैर्वा गन्धकेन समेन वा ॥११२॥
मर्दयेन्मातुलुङ्गाम्लैः पूर्वखोटं दिनावधि ।
तत्पिण्डं पक्वमूषायां रुध्वा गजपुटे पचेत् ॥११३॥
आरण्योपलकैरेवं पुटं दद्याच्चतुर्दश ।
इन्द्रगोपकसंकाशं जायते पूजयेच्छिवम् ॥११४॥

क्षौद्रयुक्तेन तेनैव तारपत्राणि लेपयेत् ।
रुध्वा धमेत्पुटेद्वाथ एवं वारत्रये कृते ॥११५॥
जायते:कनकं दिव्यं सिद्धोयं ताररंजकः ।
इत्येवं सर्वयोगानामत्रत्यानां पृथक् पृथक् ॥११६॥
सिद्धचूर्णेन संयुक्तं कर्तव्यं विधिना बुधैः ।

॥ तारवेधः १३ ॥

शुल्वं नागं समं धाम्यं समं वा शुल्ववंङ्गकम् ॥११७॥
आवर्तते तु तच्चूर्णं सिद्धचूर्णेन पूर्ववत् ।
शुल्वं नागं बंङ्गघोषं यथेष्टैकं विचूर्णयेत् ॥११८॥
तत्समं तीक्ष्णचूर्णं च त्वंधमूषागतं धमेत् ।
एतत्खोटं विचूर्ण्याथ सिद्धचूर्णेन संयुतम् ॥११९॥
पूर्ववत् क्रमयोगेन तारमायाति काञ्चनम् ।

॥ सिद्धचूर्णेन ताम्रवेधः ॥

शुल्बस्य भागत्रितयमेककं नागवङ्गयोः ॥१२०॥
समावर्त्य विचूर्ण्याथ सिद्धचूर्णेन पूर्ववत् ।
नागमेकं द्वयं शुल्वं तच्छुल्वेनैव पन्नगम् ॥१२१॥
रुध्वा ध्मातं च तच्चूर्ण्य सिद्धचूर्णेन पूर्ववत् ।
सिद्धचूर्णत्रयो भागा भागकं हेमगैरिकम् ॥१२२॥
रुध्वा ध्मातं पुनश्चूर्ण्य सिद्धचूर्णेन पूर्ववत् ।

॥ तारवेधः १४ ॥

गन्धकेन हतं शुल्वं माक्षिकं च समं समम् ॥१२३॥
हंसपाचित्रकद्रावैर्दिनमेकं विमर्दयेत् ।
तेनैव तारपत्राणि लिप्त्वा रुध्वा पुटे पचेत् ॥१२४॥
तमुद्धृत्य धमेत्पश्चात्कृत्वा पत्राणि लेपयेत् ।
पूर्वकल्केन रुध्वाथ पुटं दत्वा समुद्धरेत् ॥१२५॥
इत्येवं दशधा कुर्यात्तारमायाति काञ्चनम् ।

॥ तारवेधः १५ ॥

तीक्ष्णं द्वयं त्रयं घोषमारं भागचतुष्टयम् ॥१२६॥

नवभागं ताम्रचूर्णं नागं च नवभागकम् ।
अंधमूषागतं ध्मातं तत्खोटं सूक्ष्मचूर्णितम् ॥१२७॥
सिद्धचूर्णेन संयुक्तं पूर्ववत् ताररञ्जनम् ।

॥ तारवेधः १६ ॥

मृतनागसमं तुत्थं द्वाभ्यां तुल्यं च माक्षिकम् ॥१२८॥
केवलं मृतनागं वा सिद्धचूर्णेन पूर्ववत् ।

॥ताररंजनं १७ ॥

नागाभ्रं वाऽथ वंगाभ्रमन्धयित्वा धमेद्धठात् ॥१२९॥
तत्खोटं सूक्ष्मचूर्णं तु सिद्धचूर्णेन संयुतम् ।
पूर्ववत् क्रमयोगेन तारमायाति काञ्चनम् ॥१३०॥
तीक्ष्णं शुल्बं नागवङ्गं मृतं नागं तु तुत्थकम् ।
चूर्णितं भागमेकैकं द्वौ भागौ हेममाक्षिकम् ॥१३१॥
वज्रमूषागतं रुध्वा ध्मातं खोटं सुचूर्णितम् ।
सिद्धचूर्णेन संयुक्तं तारमायाति काञ्चनम् ॥१३२॥

॥ तारारिष्ट करणं ३ ॥

शुल्बचूर्णं तीक्ष्णचूर्णं तुल्यं रुध्वा धमेद्धठात् ।
तत्खोटं सिद्धचूर्ण तु मर्द्य पाच्यं च पूर्ववत् ॥१३३॥
तेनैव मधुयुक्तेन तारपत्राणि लेपयेत् ।
रुध्वा गजपुटे पच्यादेवं वारत्रये कृते ॥१३४॥
पीतवर्णं भवेत्तत्तु तारारिष्टं निगद्यते ।

॥ तारारिष्ट करणं ४ ॥

वङ्गं नागं समं कान्तमथवा ताम्रनागकम् ॥१३५॥
माक्षिकं शुल्बतीक्ष्णं च शुल्बं नागं सवङ्गकम् ।
एते योगास्तु चत्वारः पृथक् चूर्णानि कारयेत् ॥१३६॥
पृथग्ध्मातानि खोटानि सिद्धचूर्णयुतानि च ।
मर्दनादिपुटान्तानि तारारिष्टकराणि वै ॥१३७॥

॥ तारारिष्टरंजन ५ ॥

पूर्ववल्लेपयोगेन प्रत्येकेन तु कारयेत् ।

तारारिष्टस्य तस्यैव स्वर्णीकरणमुच्यते ॥१३८॥
शुद्धवैक्रान्तभागैकं किंवा वैक्रांतसत्वकम् ।
नागचूर्णं तु भागैकमन्धमूषागतं धमेत् ॥ ॥१३९॥
सिद्धचूर्णेन संयुक्तं मर्दनादिपुटान्तकम् ।
कर्तव्यं पूर्ववत्प्राज्ञैस्तमादाय विमर्दयेत् ॥१४०॥
मधुना याममात्रं तु तेन लेपं तु कारयेत् ।
शतांशेन तु पत्राणां तारारिष्टस्य यत्नतः ॥१४१॥
रुध्वा गजपुटे पक्त्वा दिव्यं भवति काञ्चनम् ।

॥ तारारिष्ट रंजनं ६ ॥

राजावर्तं हिङ्गुलकं कंकुष्ठं च प्रवालकम् ॥१४२॥
प्रत्येकं कर्षमात्रं स्याद्रसकस्य पलं तथा ।
सूक्ष्मचूर्णं कृतं सर्वं सिद्धचूर्णेन संयुतम् ॥१४३॥
अन्धमूषागतं ध्मातं मर्दनादिपुटान्तकम् ।
पूर्ववत् कारयेत्पश्चान्मधुना सह मिश्रयेत् ॥१४४॥
तारारिष्टस्य पत्राणि लेपयित्वा पुटे पचेत् ।
एवं वारत्रयं कुर्याद्दिव्यं भवति काञ्चनम् ॥१४५॥

॥ तारारिष्ट वेधः ७ ॥

माक्षिकं दरदं तुत्थं राजावर्तं प्रवालकम् ।
एतानि समभागानि द्विभागो रसको भवेत् ॥१४६॥
मेषीक्षीरेण तत्सर्वं दिनमेकं विमर्दयेत् ।
छायाशुष्कं तु तत्कृत्वा तुल्यांशं मित्रपंचकम् ॥१४७॥
दत्वा तु मर्दयेत् खल्वे तारारिष्टं तु लेपयेत् ।
प्रथमं समकल्केन रुध्वा गजपुटे पचेत् ॥१४८॥
अर्धकल्केन लेप्योऽथ पादकल्केन वै पुनः ।
एवं पुटत्रये दत्ते दिव्यं भवति कांचनम् ॥१४९॥

॥ तारारिष्ट वेधः ८ ॥

रसकं नागसंतुल्यं रुध्वा खोटं प्रकारयेत् ।
सिद्धचूर्णेन संयुक्तं पुटान्ते पूर्ववत्कृतम् ॥१५०॥
तेनैव मधुनाक्तेन तारारिष्टं प्रलेपयेत् ।

रुध्वा रुध्वा पुटैः पच्यात्त्रिधा भवति काञ्चनम् ॥१५१॥

॥ ताम्रवेधः ॥

शुल्बपत्राणि तप्तानि आरनाले विनिक्षिपेत् ।
पुनः पाच्यं पुनः क्षेप्यं यावत्तत्रैव शीर्यते ॥ ॥१५२॥
तत्पत्रमारनालस्थं क्षालयेदारनालकैः ।
पादांशं टङ्कणं दत्वा याममम्लेन पेषयेत् ॥१५३॥
रुध्वा लघुपुटैः पच्यादेवं शतपुटैः पचेत् ।
मध्वाज्यं टंकणः पश्चात्पच्याद्रुध्वा धमेद्धठात् ॥१५४॥
तच्छुल्बं कालिकाहीनं जायते शुकतुण्डवत् ।
तच्छुल्बं त्रिगुणं तारे निर्वाप्यं काञ्चनं भवेत् ॥१५५॥

॥ तारवेधः १८ ॥

शिग्रुपत्रसमैः पत्रैर्मूलैः प्रवालसंनिभैः ।
ज्ञेया दिव्यौषधी सिद्धा नाम्ना सा कीटमारिणी ॥१५६॥
तद्द्रवैः पारदो मर्द्यो यावत्सप्तदिनावधि ।
तेनैव तारपत्राणि प्रलिप्तानि विशोषयेत् ॥ ॥१५७॥
रुध्वा गजपुटे पच्यादेवं कुर्यात्त्रिसप्तधा ।
जायते कनकं दिव्यं पुरा नागार्जुनोदितम् ॥ ॥१५८॥

॥ ताररंजनं १९ ॥

शुद्धसूतसमा राजी सूतपादं च गन्धकम् ।
मृद्भाण्डे पाचयेच्चुल्यां धत्तूरद्रवसंयुतम् ॥१५९॥
वासाकाष्ठेन तन्मर्द्यं द्रवो देयः पुनः पुनः ।
एवं दिनत्रयं कुर्याज्जायते भस्मसूतकः ॥१६०॥
तन्मर्द्यं मातुलुङ्गाम्लैर्दिनमेकं तु तेन वै ।
चतुःषष्टितमांशेन तारपत्राणि लेपयेत् ॥१६१॥
रुध्वा गजपुटे पच्यादेवं वारत्रये कृते ।
तत्तारं जायते स्वर्णं महादेवेन भाषितम् ॥ ॥१६२॥
तारस्य रञ्जनमिदं सुख भोग हेतु–
कृत्वा विवेकमतिभिर्भुवने जनानाम् ।

देयं सदा सकलकीर्तिशुभाप्तिसिद्ध्यै
नो चेद्वने वसतिरेव परा हि धन्या ॥१६३॥

इतिश्री पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके वज्रशोधनादि तारञ्जनं नाम चतुर्थोपदेशः ॥ ४ ॥

———:o:———

# ॥ अथ श्री वादिखंडे पंचमापदेशः ॥

सितस्वर्णस्य ( स्वर्ण तारयोजः ) कनकं १

महारसैश्चोपरसैः ससूतैर्हेम्नो दलं रञ्जनमत्र युक्त्या ।
नानाविधं वर्णविवर्धनं च तत्कथ्यते वार्तिकभुक्तियोग्यम् ॥१॥
वैक्रान्तसत्वभागैकं शुद्धवैक्रान्तमेव वा ।
कांस्याख्या विमला वापि हेमाख्या विमलापि वा ॥२॥
समेन नागचूर्णेन अन्धमूषागतं धमेत् ।
सिद्धचूर्णेन संयुक्तं मर्दनादिपुटान्तकम् ॥३॥
आदाय मधुना पेष्यं याममात्रं प्रयत्नतः ।
स्वर्णं तारं समं द्राव्यं तेन पत्राणि कारयेत् ॥४॥
सितस्वर्णमिदं ख्यातं पूर्वकल्केन लेपयेत् ।
रुध्वा गजपुटे पच्यादेवं वारत्रये कृते ॥५॥
जायते कनकं दिव्यं सेचयेल्लवणोदकैः ।
लोहसंक्रान्तितुल्यर्थं सेच्यं ब्राह्मीद्रवेण वा ॥६॥
एवं विमलनागाभ्यां पृथग्योग उदाहृतः ।

॥ सितस्वर्णस्य स्वर्णक्रिया २ ॥

नागवैक्रान्तयोगेन मधूच्छिष्टेन लेपयेत् ॥७॥
सहस्रांशेसिते हेमे दिव्यं भवति काञ्चनम् ।

॥ सितस्वर्णवेधः ३ ॥

मेषीक्षीराम्लवर्गाभ्यां दरदं घर्मभावितम् ॥८॥
शतधा तत्प्रयत्नेन शोष्यं पेष्यं पुनः पुनः ।
अनेन सितस्वर्णस्य पत्रं लिप्त्वा पुटे पचेत् ॥ ॥९॥
एवं त्रिसप्तधा कुर्याद्दिव्यं भवति काञ्चनम् ।

॥ सितस्वर्णवेधः ४ ॥

नागचूर्णं ताप्यचूर्णं नागवैक्रान्तमेव वा ॥१०॥
अंधमूषागतं खोटं सिद्धचूर्णेन संयुतम् ।
मर्दनं पुटपाकं च पूर्ववत्कारयेत्क्रमात् ॥११॥
तेनैव मधुनाक्तेन शुद्धं हाटकपत्रकम् ।
लिप्त्वा लिप्त्वा पुटैः पच्याद्यावत्कुङ्कुमसंनिभम् ॥१२॥
एतेत्स्वर्णशतांशेन सितस्वर्णं तु वेधयेत् ।
जायते कनकं दिव्यं रक्तवर्गेण सेचयेत् ॥१३॥

॥ सितस्वर्ण वेधः ५ ॥

वैक्रान्तं नागचूर्णं च पुटान्तं पूर्ववत्कृतम् ।
शतांशे नैव वेधंतु सितहेमेन पूर्ववत् ॥१४॥
लेपनात्पुटपाकाच्च दिव्यं भवति कांचनम् ।

॥ सितस्वर्ण वेधः ६ ॥

माक्षिकस्य समांशेन राजावर्तं दिनत्रयम् ॥१५॥
मातुलुङ्गद्रवैर्मर्द्यं तेनपत्राणि लेपयेत् ।
पूर्वोक्तसितस्वर्णस्य रुध्वा गजपुटे पचेत् ॥१६॥
पुनर्लेप्यं पुनः पाच्यं सप्तधा कांचनं भवेत् ।

॥ तारवेधः २० ॥

राजावर्तं च सिदूरं पारावतमलं समम् ॥१७॥
अशीत्यंशेन कुरुते स्वर्णं रौप्यं च पूर्ववत् ।

॥ सितस्वर्ण वेधः ७ ॥

रसैः शिरीषपुष्पस्य आर्द्रकस्य रसैः समैः ॥१८॥
भावयेत्सप्तवाराणि राजावर्तं सुचूर्णितम् ।
तेनैव शतमांशेन स्वर्णतारं द्रुतं समम् ॥१९॥
वेधयेत्पूर्ववत् सिद्धं दिव्यं भवति काञ्चनम् ।

॥ सितस्वर्ण वेधः ८ ॥

कङ्कुष्ठं विमला ताप्यं रसकं दरदं शिला ॥२०॥
राजावर्तं प्रवालं च कांक्षीगैरिकटङ्कणम् ।
सैन्धवं चूर्णयेत्तुल्यमशीत्यंशेन वापयेत् ॥२१॥

द्रुते समे स्वर्णतारे पूर्ववत्सेचयेत्क्रमात् ।
त्रिवारं वापयेदेवं दिव्यं भवति काञ्चनम् ॥२२॥

पक्वबीजं (हेमरक्तिका) स्वर्णस्यवर्ण विवर्धनार्थं सितस्वर्ण वेधः

गैरिकं च प्रवालं च काकमाच्या द्रवैः समम् ।
यामं मर्द्यं तु तद्रुध्वा आरण्योत्पलकैः पुटेत् ॥२३॥
इत्येवं तु त्रिधा कुर्यान्मर्दनं पुटपाचनम् ।
तदर्धं हिङ्गुलं शुद्धं क्षिप्त्वा तस्मिन्विमर्दयेत् ॥२४॥
काञ्जिकैर्याम मात्रं तु पुटेनैकेन पाचयेत् ।
अस्य कल्कस्य भागैकं भागाश्चत्वारि हाटकम् ॥२५॥
अन्धमूषागतं ध्मातं समादाय विचूर्णयेत् ।
पूर्ववत् पूर्वकल्केन रुध्वा देयं पुटं पुनः ॥२६॥
एवं चतुःपुटैः पक्वं स्वर्णं गुञ्जानिभं भवेत् ।
पक्वबीजमिदं सिद्धं तत्तत्कर्मणि योजयेत् ॥२७॥

॥ पक्वबीजेन सितस्वर्ण वेधः ॥

अनेन षोडशांशेन सितस्वर्णं तु वेधयेत् ।
सेचयेत्कुंकुणीतैले रक्तवर्गेण वापितम् ॥२८॥
पुनर्वेध्यं पुनः सेच्यं षोडशांशेन बुद्धिमान् ।
एवं वारत्रयं वेध्यं दिव्यं भवति काञ्चनम् ॥२९॥

॥ अष्टवर्णस्वर्णस्य दशवर्णकरं ॥

पूर्वोक्तपक्वबीजेन वेधयेदष्टवर्णकम् ।
तत्स्वर्णं दशवर्णं स्यात्पुटे दत्ते न हीयते ॥३०॥

॥ हेमरक्तिकरणम् ॥

निष्काः षोडश तुत्थस्य सूतहिङ्गुलगन्धकम् ।
टङ्कणं च तथैकैकं योज्यं निष्कचतुष्टयम् ॥३१॥
सर्वमेतद्दिनं मर्द्यं त्रिधारस्नुक्पयोन्वितम् ।
निष्कमात्रां वटीं कृत्वा श्रेष्ठे स्वर्णे द्रुते क्षिपेत् ॥३२॥
एकैकं निष्कमात्रं तु मूषामध्ये दिनं धमेत् ।
जीर्णे जीर्णे पुनर्देया एवं सर्वाः प्रदापयेत् ॥३३॥
गुञ्जावर्णं भवेत्स्वर्णं ख्यातेयं हेमरक्तिका ।

॥ अष्टवर्णस्वर्णस्य दशवर्णकरं ॥

अष्टवर्णसुवर्णस्य द्रावितस्य दशांशतः ॥३४॥
क्षिपेत्तज्जायते सत्यं दशवर्णं तु शोभनम् ।

॥ स्वर्णस्य वर्णविवर्धनम् ॥

ताम्रतुल्येन नागेन शोधयेद्धमनेन च ॥३५॥
ताम्रतुल्यं शुद्धहेम समावर्त्य तु पत्रयेत् ।
इष्टिका तुवरी चैव खटिका लवणं तथा ॥३६॥
गैरिकं भागवृद्धयांशमारनालेन पेषयेत् ।
तेन लिप्त्वा पूर्वपत्रं रुध्वा गजपुटे पचेत् ॥३७॥
एवं पुनः पुनः पाच्यं यावत्स्वर्णावशेषितम् ।
तत्स्वर्णं ताम्रसंयुक्तं समावर्त्य तु पत्रयेत् ॥३८॥
पूर्ववत् पुटपाकेन पचेत्स्वर्णावशेषितम् ।
इत्येवं षड्गुणं ताम्रं स्वर्णे बाह्यं क्रमेण तु ॥३९॥
तत्सर्वं जायते दिव्यं पद्मरागसमप्रभम् ।
षट्त्रिंशांशेन तेनैव अष्टवर्णं तु वेधयेत् ॥४०॥
तत्स्वर्णं जायते दिव्यं दशवर्णं न संशयः ।

॥ वर्णविवर्धनम् ॥

समं ताप्यं ताम्रचूर्णं ताप्यार्धं लोहचूर्णकम् ॥४१॥
कन्याद्रावैः क्षणं मर्द्यं धर्मे तेनैव भावयेत् ।
एवं वाराश्चतुःषष्टिस्ततः शुष्कं विचूर्णयेत् ॥४२॥
शोडशांशेन तेनैव अष्टवर्णं तु वेधयेत् ।
तत्स्वर्णं जायते दिव्यं दशवर्णं न संशयः ॥४३॥

॥ वर्णविवर्धनम् ॥

रसकं घोषताम्रं च काचं श्वेतं नृकेशकम् ।
पलानि पंचपंचैव प्रत्येकं चूर्णयेत् पृथक् ॥४४॥
रसकात्रिगुणं योज्यं तीक्ष्णचूर्णं पुनस्ततः ।
गन्धकं रसकं कांस्यमाक्षिकं चाष्टनिष्ककम् ॥४५॥
त्रिंशनिष्कं धूमसारं सर्वमेतद्दिनावधि ।
मर्द्यं जम्बीरजैर्द्रावैः कर्षांशं वटकीकृतम् ॥४६॥

कोष्ठीयन्त्रे हठाद्धाम्यं यावत्ताम्रावशेषितम् ।
षड्गुणम् तस्य ताम्रस्य सीसे वाह्यं धमन्धमन् ॥४७॥
षट् त्रिंशांसेन तेनैव अष्टवर्णं तु वेधयेत् ।
दशवर्णं भवेत्तत्तु नात्रकार्या विचारणा ॥४८॥

॥ ताम्रस्य कालिका विनाशनं ॥

अथान्यस्य च ताम्रस्य नागशुद्धस्य कारयेत् ।
निर्गुण्डिकारसेनैव पंचाशद्वारढालनम् ॥४९॥
कुष्माण्डस्य रसेनैव सप्तवारं तु ढालनम् ।
निशोयुक्तेन तक्रेण सप्तवारं तु ढालनम् ।
एवं ताम्रं द्रुतं ढाल्यं कालिकारहितं भवेत् ॥५०॥

॥ कालिकाहीनताम्रेण जोटकः ॥

एतत्ताम्रं त्रिभागं स्याद्भागाः पंचैव हाटकम् ।
रौप्यं भागद्वयं शुद्धं सर्वमावर्तयेत्ततः ॥५१॥
जायते कनकं दिव्यं पुरा नागार्जुनोदितम् ।

॥ वर्णविवर्धनम् ॥

अङ्कोल्लकाष्ठं प्रज्वाल्य आरण्योपलचूर्णकम् ॥५२॥
अङ्कोल्लबीजचूर्णं तु ज्वलत्काष्ठोपरि क्षिपेत् ।
तदङ्गारान्समादाय शीतलांश्च पुमर्धमेत् ॥५३॥
अङ्कोल्लबीजचूर्णं तु क्षिप्त्वा वस्त्रेण बन्धयेत् ।
तद्धूमैः स्वर्णपत्राणि दशवर्णानि धूपयेत् ॥५४॥
द्रावयित्वा क्षिपेत्तैले पुत्रजीवोत्थिते पुनः ।
एवं वारद्वये क्षिप्ते वर्धते वर्णकद्वयम् ॥५५॥

अल्पाल्पयुक्ति विभवैः सुखसाध्ययोगै-
रल्याल्प कर्मविधिना वहुभिर्विशेषैः ।
लाभार्थपाददशमांशकरोपदेशः
प्रोक्तो मया सकललोकहिताय सत्यम् ॥५६॥

इतिश्री पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके वर्णोत्कर्षणो—वर्णविवर्धनो नाम पंचमोपदेशः ॥ ५ ॥

———:०:———

# ॥ अथ श्री वादिखंडे षष्ठोपदेशः ॥

नानारक्तसुपीतपुष्पनिचयादादाय सारं निजं ।
तस्मिञ्छोधितपन्नगं द्रुतमतः संढाल्यं वारं शतम् ।
पश्चाद्रञ्जनवेधनं च विधिना चन्द्रार्कताम्रस्य यत् ।
तत्सर्वं गुरुशास्त्रतः स्वमतिना संकथ्यते सांप्रतम् ॥१॥

॥ नागस्य रंजन १ ॥

स्तम्भिता गन्धपिष्टी या गन्धजारणवर्जिता ।
तस्याः षोडशभागा वै भागैकं मृतवज्रकम् ॥२॥
देवदाल्याः शङ्खपुष्प्या द्रवैर्मर्द्यं दिनत्रयम् ।
पचेत्कच्छपयन्त्रस्थं पुटैकेन समुद्धरेत् ॥३॥
यामैकं पूर्वजैर्द्रावैर्मर्द्यं तत्पूर्ववत्पुटेत् ।
एवं सप्तपुटैः पक्वो यामं मर्द्यश्च तैर्द्रवैः ॥४॥
दिनैकं पातनायन्त्रे पाचयेल्लघुनाग्निना ।
पुनर्मर्द्यं पुनः पाच्यं यावदूर्ध्वं न गच्छति ॥५॥
अधोयन्त्रे यदा तिष्ठेत्तदा स्याद्रक्तपारदः ।
रक्तपारद भागैकं द्वयं कृष्णाभ्रसत्वकम् ॥६॥
टङ्कणस्य च भागैकं सर्वं मर्द्यं दिनावधि ।
वज्रीक्षीरैस्तु तत्पिण्डं रुध्वा गजपुटे पचेत् ॥७॥
पुनमर्द्यं पुनः पाच्यमेवं वारांश्चतुर्दश ।
षोडशांशेन नागस्य वेधे दत्ते च काञ्चनम् ॥८॥
जायते दिव्यरूपाढ्यं देवाभरणमुत्तमम् ।

॥ नागस्य स्वर्ण २ ॥

शाककिंशुककोरण्टद्रवैः कङ्गुणितैलतः ॥९॥
मर्दयेन्नागचूर्णं तु दिनं संपुटगं पचेत् ।
सम्यग्गजपुटेनैव मर्द्यं पाच्यं पुनः पुनः ॥१०॥
चत्वारिंशत्पुटैः सिध्यं दिव्यं भवति काञ्चनम् ।

॥ नागस्य स्वर्ण ३ ॥

रसकं कुङ्कुमं तुत्थं बालवत्सपुरीषकम् ॥११॥

पीताभ्रकं विषं तुल्यं मातुलुङ्गद्रवैर्दिनम् ।
मर्दितं छायया शुष्कं मधुना सह कल्कयेत् ॥१२॥
तेन नागस्य पत्राणि लिप्त्वा शोष्याणि छायया ।
अन्धमूषागतं ध्मातं शाकपत्रद्रवे ततः ॥१३॥
सेचयेदुद्धरेत्पश्चात्पक्वं द्रावयेत्पुनः ।
शाकपत्रद्रवैः सेच्यं पुनर्द्राव्यं च सेचयेत् ॥१४॥
इत्येवं सप्तधा कुर्यात्पुनः पत्राणि कारयेत् ।
लेपयेत्पूर्ववच्छोष्यं रुध्वा धाम्यं च पूर्ववत् ॥१५॥
सेचनं द्रावणं चैव सप्तवाराणि कारयेत् ।
इत्येवं सप्तधा कुर्याल्लेपादि द्रावणान्तकम् ॥१६॥
तन्नागं जायते दिव्यं जाम्बूनदसमप्रभम् ।

॥ नागस्य स्वर्णं ४ ( भूनागतैलं )

दग्धं तु चुन्नपाषाणमारनाले विनिक्षिपेत् ॥१७॥
मृत्पात्रे लोलितं स्थाप्यं दिवारात्रं प्रयत्नतः ।
तत्स्वच्छं ग्राहयेद्द्रावं तद्द्रावैः शाककुड्मलान् ॥१८॥
पेषयेत्तेन कल्केन नागचूर्णं विमर्दयेत् ।
यामान्ते शोषयेद्धर्मे पुनर्मर्द्यं च शोषयेत् ॥१९॥
इत्येवं दशधा कुर्यात्तद्गोलं निक्षिपेत्पुनः ।
शाकदण्डस्य सार्द्रस्य गर्भे तेनैव रोधयेत् ॥२०॥
मृदा लिप्तं तु तच्छुष्कं सम्यग्गजपुटे पचेत् ।
समुद्धृत्य भवेत्पीतं स्तंभनं चास्य कथ्यते ॥२१॥
गोमूत्रैः क्षालयेदादौ भूनागाञ्जीवसंयुतान् ।
सौवीराञ्जनमेतेषु तुल्यं क्षिप्त्वा विमर्दयेत् ॥२२॥
दिनैकं महिषीमूत्रैर्जातं गोलं समुद्धरेत् ।
तस्मात्पातालयन्त्रेण ग्राह्यं तैलं प्रयत्नतः ॥२३॥
तस्मिंस्तैले पूर्वनागमथवा शुद्धनागकम् ।
द्रावितं द्रावितं क्षेप्यमेकविंशतिवारकम् ॥२४॥
तन्नागं जायते दिव्यं जाम्बूनदसमप्रभम् ।

॥ नागस्य स्वर्णं ५ ॥

शुद्धनागस्य चूर्णं तु समं भूनागचूर्णकम् ॥२५॥

शाककिंशुक कोरण्टपुष्पाणां ग्राहयेद्रसम् ।
यथालाभेन तद्द्रावैर्दिनमेकं विमर्दयेत् ॥२६॥
अंधमूषागतं धाम्यं ततश्चूर्णं तु कारयेत् ।
पूर्ववन्मर्दितं धाम्यमेवं कुर्यात्रिसप्तधा ॥२७॥
जायते कनकं दिव्यं तन्नागं देवभूषणम् ।

॥ ताम्रवेधः १ ॥

शुद्धनागपलैकेन मूषा कार्या सुवर्तुला ॥२८॥
पलं शुद्धरसं तस्यां क्षिपेद्गन्धं पलद्वयम् ।
तां मूषां मृण्मये पात्रे धारयेदातपे खरे ॥२९॥
दिनं जम्बीरनीरेण काकमाची द्रवैर्दिनम् ।
कासमर्दरसैश्चाहो दिनं धत्तूरजैर्द्रवैः ॥३०॥
क्रमेण भावयेदेवं घर्मे दिनचतुष्टयम् ।
मृत्पात्रात्सर्वमुद्धृत्य यथा किंचिन्न गच्छति ॥३१॥
पिष्ट्वा धत्तूरजैर्द्रावैः करञ्जस्य तु बीजकम् ।
तेनैवाङ्गुलमात्रं तु मूषागर्भं प्रलेपयेत् ॥३२॥
पूर्वं पिण्डं क्षिपेत्तत्र पलैकं चाथ गन्धकम् ।
भूनगानां द्रवं तत्र निक्षेपेन्निष्कपंचकम् ॥३३॥
विधाय लेपकल्केन ततो मूषां निरुध्य च ।
भूधरे दिनमेकं तु करीषाग्नौ विपाचयेत् ॥३४॥
स्वाङ्गशीतं समुद्धृत्य मूषायां पूर्ववत्क्षिपेत् ।
लेपं गन्धं च भूनागं पूर्ववच्च पुटे पचेत् ॥३५॥
एवं विंशगुणं यावज्जार्यं गन्धं सुसाधितम् ।
सार्धं पलद्वयं तालं रसकं चापि तत्समम् ॥३६॥
पलैकं टङ्कणं पिष्ट्वा द्विधा कुर्यात्त्रयं पृथक् ।
काचकूप्यन्तरे क्षिप्त्वा तालकार्धं ततः क्षिपेत् ॥३७॥
रसकं टङ्कणं पश्चात्सिद्धं पूर्वरसं पुनः ।
टङ्कणं रसकं तालं क्रमाद्दद्यात्पुनस्त्रयम् ॥३८॥
काचकूप्या मुखं दीपतप्तं स्वाङ्गेन वेष्टयेत् ।
अथवा काचकीलेन रुध्वा मृल्लवणेन च ॥३९॥

कूपिकां च मृदा लेप्य सर्वत्रांगुलमात्रकम् ।
तां शुष्कां भूधरे यन्त्रे क्षिप्त्वा पूर्वं च खर्परम् ॥४०॥
दत्वा मृदा लिपेत्संधिं देयं गजपुटं पुनः ।
स्वाङ्गशीतं समुद्धृत्य बलिं पूजां च कारयेत् ॥४१॥
चतुःषष्टितमांशेन द्रुतं शुल्बं तु वेधयेत् ।
स्वर्णं भवति रूपाढ्यं सिद्धयोग उदाहृतः ॥४२॥

॥ ताम्र तारवेधः २ ॥

पलानि दशगन्धस्य सूतकस्यैकविंशतिः ।
महाकालस्य बीजोत्थतैलं पंचपलं भवेत् ॥४३॥
सर्वं स्निग्धघटे रुध्वा पाचयेन्मृदुवह्निना ।
माषपिष्टप्रलेपेन यथा धूमो न गच्छति ॥४४॥
स सूतो जायते खोटश्चन्द्रार्कं द्राविते क्षिपेत् ।
सहस्रांशेन तेनैव दिव्यं भवति काञ्चनम् ॥४५॥

॥ ताम्र वेधः ३ ॥

पारदं गंधकं तुल्यं देवदालीद्रवैर्दिनम् ।
मर्दितं तेन ताम्रस्य पत्रलेपं तु कारयेत् ॥४६॥
आवर्त्य चान्धमूषायां समुध्धृत्य ततः पुनः ।
शाकवृक्षस्य पत्राणां कोमलानां द्रवं हरेत् ॥४७॥
तद्द्रवे पूर्वशुल्बं तु द्रावितं द्रावितं क्षिपेत् ।
इत्येवं शतधा कुर्याद्दिव्यं भवति काञ्चनम् ॥४८॥

॥ ताम्रवेधः ४ ॥

पीतगन्धकचूर्णं तु नागवल्या द्रवैस्त्र्यहम् ।
भावितं तेन ताम्रस्य पत्रलेपं तु कारयेत् ॥४९॥
शुष्कं रुध्वा पुटे पच्यादारण्योपलकैः शुभैः ।
शाकवृक्षत्वचा मर्द्यं द्रवै रक्ताश्वमारकैः ॥५०॥
पूर्वताम्रस्य पत्राणि कल्केनानेन लेपयेत् ।
रुध्वा तीव्राग्निना धाम्यमेवं वारशते कृते ॥५१॥
तत्ताम्रं जायते स्वर्णं जाम्बूनदसमप्रभम् ।
काञ्चनीमूलचूर्णं तु हरितालं मनःशिला ॥५२॥

टङ्कणं माक्षिकं तुल्यं वासापुष्पद्रवैस्त्र्यहम् ।
मर्दितं लेपयेत्तेन ताम्रपात्रं सुशोधितम् ॥५३॥
शनैर्मन्दाग्निना ताप्यं शुष्कलेपं च दापयेत् ।
पुनस्ताप्यं पुनर्लेप्यं सप्तधेत्थं प्रयत्नतः ॥५४॥
ततस्तीव्राग्निना धाम्यं जायते काञ्चनं शुभम् ।

॥ ताम्रवेधः ५ ॥

तालं ताप्यं दरदकुनटीं सूतकं सार्धभागं ॥५५॥
खल्वे कृत्वा त्रिदिनमथितं काकमाच्या द्रवेथ ।
तेनालेप्यं रविशशिदलं खर्परे वह्निपक्वं ॥५६॥
शुल्बातीतं भवति कनकं सौवलं पांथिकानाम् ।

॥ ताम्रवेधः ६ ॥

ज्वालामुखीद्रवैर्मर्द्यं पलैकं शुद्धपारदम् ॥५७॥
दिनान्ते निक्षिपेत्तस्मिन्पादांशं मृतमभ्रकम् ।
ताम्रचूर्णस्य पादांशं पादांशं फुल्लतोरिका ॥५८॥
सर्वं ज्वालामुखीद्रावैर्मर्दयेद्दिनसप्तकम् ।
तद्गोलं वज्रमूषायां रुध्वा तीव्राग्निना धमेत् ॥५९॥
तत्खोटं भागमेकं तु शुद्धताम्रं चतुष्टयम् ।
अंधमूषागतं धाम्यं समुध्धृत्य ततः पुनः ॥६०॥
द्राव्यं प्रकटमूषायां पुत्रजीवोत्थतैलके ।
ढालयेच्च पुनर्द्राव्यमेवं कुर्यात्रिसप्तधा ॥६१॥
जायते कनकं दिव्यं नात्र कार्या विचारणा ।

॥ ताम्रवेधः ७ ॥

गन्धकं श्वेतपालाशफलद्रावैर्विभावयेत् ॥६२॥
शतवारं प्रयत्नेन शोष्यं पेष्यं पुनः पुनः ।
शतवारं प्रयत्नेन तेन पत्राणि लेपयेत् ॥६३॥
सम्यक् शुद्धस्य ताम्रस्य रुध्वा गजपुटे पचेत् ।
समुध्धृत्य पुनर्धाम्यं ततः पत्राणि कारयेत् ॥६४॥
पुनर्लेप्यं पुनः पाच्यं पुनरावर्तयेत्क्रमात् ।
एवं त्रिसप्तधा कुर्याद्दिव्यं भवति काञ्चनम् ॥६५॥

॥ ताम्रवेधः ॥

भागा द्वादश तारस्य शुल्वस्य भागषोडश ।
आवर्त्य कारयेत्पत्रं लिप्त्वा रुध्वा पुटे पचेत् ॥६६॥
महिन्दीपत्रनिर्यासैरेवं वाराणि षोडश ।
रसगन्धशिला भागान्क्रमवृद्ध्या विमर्दयेत् ॥६७॥
दिनमङ्कोलतैलेन पूर्ववच्च क्रमेण तु ।
लिप्त्वा रुध्वा धमेद्गाढं पुनःपत्रं च कारयेत् ॥६८॥
पुनर्लेप्यं पुनःपाच्यं यावत्कांस्यं क्षयं व्रजेत् ।
अष्टवर्णं भवेद्धेम नात्र कार्या विचारणा ॥६९॥

॥ पारदवेधः रसवेधः ॥

औषधीकरुणी नाम प्रावट्काले प्रजायते ।
नीलपुष्पा श्वेतपत्रा पिच्छिलातिरसा तु सा ॥७०॥
तद्द्रवं पारदे शुद्धे धाम्यमाने विनिक्षिपेत् ।
वज्रमूषास्थिते चैव यावत्सप्तदिनावधि ॥७१॥
जायते कनकं दिव्यं रस एव न संशयः ।

॥ रसवेधः ॥

पलं सूतं पलं गन्धं कृष्णोन्मत्तद्रवैस्त्र्यहम् ॥७२॥
मर्दितं वज्रमूषायां रुध्वा वक्त्रं पिधाय च ।
दिनान्ते तत्समुद्धृत्य तद्वन्मर्द्यं च पाचयेत् ॥७३॥
एवं सप्तदिनं कुर्यान्मृतो भवति वै रसः ।
तद्रसं पन्नगं स्वर्णं चन्द्रार्कैर्वेष्टयेत्क्रमात् ॥७४॥
समांशं चान्धितं धाम्यं दिव्यं भवति काञ्चनम् ।

॥ ताम्रवेधः ॥

गर्तामध्ये रसमूषा बाह्यगतैः सर्वतोऽग्निः ॥७५॥
चक्रयंत्रमिदं प्रोक्तं सर्वशास्त्रार्थकोविदैः ।
माक्षिकं रसकं तुल्यं रसकार्धं च सैन्धवम् ।
मातुलुङ्गैर्दिनं मर्द्यं मृद्भाण्डे पाचयेद् दिनम् ॥७६॥
यावत्कुङ्कुमवर्णं स्यात्तावच्चुल्यां विपाचयेत् ।
सिताक्षौद्रेण संयुक्तं तत्कल्कं मर्दयेद्दिनम् ॥७७॥

पुनर्मृत्खर्परे पच्याद्गोक्षीरेण समायुतम् ।
चालयन् दिनमेकं तु अवतार्य विलेपयेत् ॥७८॥
शुद्धानि शुल्वपत्राणि रुध्वा तीव्राग्निना धमेत् ।
ततः पत्रीकृतं लेप्यं तद्वद्धाम्यं दृढाग्निना ॥७९॥
इत्येवं च पुनः कुर्यात्पीतवर्णं भवेत्तु तत् ।
मुनिपुष्पैस्त्र्यहं भाव्या अतिरक्ता मनःशिला ॥८०॥
अनया पूर्वशुल्वं तु पत्रं कृत्वा प्रलेपयेत् ।
अन्धमूषागतं ध्मातं कङ्गुणीतैलके क्षिपेत् ॥८१॥
इत्येवं तु त्रिधा कुर्याद्दिव्यं भवति काञ्चनम् ।
अनेनैव प्रकारेण तारारिष्टं तु रञ्जयेत् ॥८२॥
जायते कनकं दिव्यं जाम्बूनदसमप्रभम् ।

सहस्रवेधी कल्कः । ताम्र-तारवेधः

शुद्धसूतपलकं तु कर्षैकं गन्धकस्य च ॥८३॥
स्निग्धखल्वे विनिक्षिप्य देवदालीरसप्लुतम् ।
मर्दयेत्तु कराङ्गुल्या जायते गन्धपिष्टिका ॥८४॥
धान्याभ्रकस्य भागैकं भागाष्टौ शुद्धपारदम् ।
कुण्डगोलकसयुक्तं मर्दनात्पिष्टिका भवेत् ॥८५॥
एतत्पिष्टिद्वयं मर्द्यं जम्बीरोत्थैर्द्रवैर्दिनम् ।
पालाशमूलक्वाथेन मर्दयेच्च दिनत्रयम् ॥८६॥
ब्रह्ममूलं गुडं गुञ्जां ऊर्णां टङ्कणकं समम् ।
पिष्ट्वा क्षौद्रेण संयुक्तं पूर्वपिण्डं विलेपयेत् ॥८७॥
रुध्वा तीव्राग्निना धाम्यं खोटो भवति तद्रसः ।
पाच्यंप्रकटमूषायां काचं टङ्कणकं क्षिपेत् ॥८८॥
एवं पुनः पुनः शोध्यं यावद्भवति निर्मलम् ।
ततश्च प्रकटं धाम्यं दत्वा नागं पुनः पुनः ॥८९॥
त्रिगुणं वाहयेदेवं रसराजस्य पन्नगम् ।
कृष्णाभ्रैः पुटितैरेव तत्खोटं रञ्जयेत्क्रमात् ॥९०॥
मूषायां धाम्यमानं तच्छतवारं पुनः पुनः ।
दत्वा दत्वाभ्रकं कृष्णं रञ्जितो जायते ध्रुवम् ॥९१॥

सहस्रांशेन तेनैव चन्द्रार्कं काञ्चनं भवेत् ।

॥ सहस्रवेधी रसः- ताम्रवेधः ॥

स्तम्भिता गन्धपिष्टी या गन्धजारणवर्जिता ॥९२॥
पलैकं मर्दयेत्तस्या जम्बीराणां द्रवैर्दिनम् ।
ब्रह्मक्वाथैस्त्र्यहं पश्चात्तत्समं गुडटङ्कणम् ॥९३॥
ऊर्णां गुञ्जां क्षिपेत्तस्मिन्सर्वमेकत्र मर्दयेत् ।
छायाशुष्कां वटीं कुर्यान्महदग्निगतां धमेत् ॥९४॥
तं खाठं शोधयेत्पश्चात् श्वेतटङ्कणकाचकैः ।
शोधयेद्धमनेनैव खोटो भवति निर्मलः ॥९५॥
तं खोटं कुटिलं गन्धं प्रतिकर्ष प्रलेपयेत् ।
अन्धमूषागतं धाम्यं यावत्खोटावशेषितम् ॥९६॥
अनेन क्रमयोगेन वङ्गं निर्वाप्य षड्गुणम् ।
ततो गन्धं च नागं च वाहयेच्छड्गुणं पुनः ॥९७॥
शुल्बचूर्णं पलैकं तु सिद्धचूर्णेन संयुतम् ।
रुध्वा तं च धमेत् खोटं गंधकं तेन मर्दयेत् ॥९८॥
रुध्वा गजपुटे पच्यादेवं वारांश्चतुर्दश ।
अनेन पूर्ववत्खोटं द्रावितं योजयेच्छनैः ॥९९॥
यावत्कुङ्कुमवर्णं स्योत्तावद्द्रंज्यं क्षिपन्क्षिपन् ।
ततः स्वर्णं च गन्धं च खोटं तुल्यं पृथक्पृथक् ॥१००॥
ततो रुध्वा धमेत्तीव्रं यावत्खोटावशेषितम् ।
इत्येवं त्रिगुणं वाह्यं स्वर्णं गन्धकसंयुतम् ॥१०१॥
पुनः स्वर्णेन तुल्येन समावर्तं तु कारयेत् ।
पुनर्द्विगुणहेम्ना तु त्रिगुणेन ततः पुनः ॥१०२॥
त्रिधैव सारितः सूतः सहस्रांशेन विध्यते ।
द्रुतं शुल्ब न संदेहो दिव्यं भवति काञ्चनम् ॥१०३॥

॥ सितस्वर्ण वेधः ॥

पूर्वं यच्छोधितं खोटमावर्त्य स्वर्णतुल्यकम् ।
सूक्ष्मचूर्णं ततः कृत्वा त्रिगुणे शुद्धपारदे ॥१०४॥
दत्वा निरुध्य मूषायां स्वेदयेन्मृदुवह्निना ।

तस्यैव द्रवते गर्भे तावत्स्वेद्यं प्रयत्नतः ॥१०५॥
अथवा दोलिकायन्त्रे स्वेदयेद् द्रुतसूतकम् ।
अनेन शतमांशेन सितं स्वर्णं विलेपयेत् ॥१०६॥
त्रिदिनं दोलिकायन्त्रे अर्कपत्रैश्च वेष्टितम् ।
काञ्जिकैः स्वेदयेत्तं तु अन्धमूषागतं धमेत् ॥१०७॥
स्वर्णं भवति रूपाढ्यं षड्वर्णोत्कर्षणं परम् ।

॥ शतवेधी वर्णवर्धनम् ॥

शोधितं सूतखोटं च भागमेकं समाहरेत् ॥१०८॥
स्वर्णं षोडशभागं स्यादन्धमूषागतं धमेत् ।
पूर्ववत्क्रमयोगेन वेधयेद्रसगर्भकः ॥१०९॥
तेनैव शतमांशेन षड्वर्णं पूर्ववद्भवेत् ।

॥ ताम्रवेधः ॥

अर्कक्षीरेण धान्याभ्रं यामं पिष्ट्वा तथान्ध्रयेत् ॥११०॥
कपोताख्ये पुटे पच्यात्पुनर्मर्द्य पुनः पचेत् ।
एवं विंशपुटैः पक्वं तदभ्रं षोडशांशकम् ॥१११॥
शुद्धसूते प्रदातव्यं पक्वमूषोदरेण तत् ।
अर्कपत्रद्रवैः पूर्वं रुध्वा स्वेद्यं दिनत्रयम् ॥११२॥
तुषाग्निना प्रयत्नेन समुद्धृत्याथ निक्षिपेत् ।
तस्मिन्नभ्रं द्रवं चैव दत्वा तद्वत्पचेत् त्र्यहम् ॥११३॥
इत्येवं जारयेत्सूते यावत्तुल्याभ्रकं भवेत् ।
तिलपर्णी रसेनैव तत्सूतं चाभ्रकं पुनः ॥११४॥
मर्दयेत्तप्तखल्वे तु यावद्भवति गोलकः ।
पृथक्सूतेन तुल्येन गंधपिष्टीं तु कारयेत् ॥११५॥
स्तम्भिता गन्धपिष्टी या गन्धजारणवर्जिता ।
तत्पिष्टी स्वर्णपिष्टी च रसाभ्रं गोलकं तथा ॥११६॥
समांशं त्रितयं मर्द्यं द्रवैः कार्पासजैर्दिनम् ।
तद्गोलं वर्तुलं कृत्वा वस्त्रे बध्वाथ शोषयेत् ॥११७॥
पाचयेद् गन्धतैले तु यावत्कुंकुमसंनिभम् ।
संजातं तत्समुद्धृत्य पिष्ट्वा निर्गुण्डिजैर्द्रवैः ॥११८॥

तेनैव चाष्टमांशेन नागपत्राणि लेपयेत् ।
पिष्ट्वा कार्पासपत्राणि तत्कल्केन च लेपयेत् ॥११९॥
नागपत्राणि रुद्ध्वाथ भूधराख्ये पुटे पचेत् ।
समृध्धृत्य पुनर्लेप्यमष्टमांशेन तेन वै ॥१२०॥
कार्पासपत्रकल्केन लिप्त्वा रुध्वा पुटे पचेत् ।
ऊर्ध्वाधः परिवर्तेन अहोरात्रात्समुद्धरेत् ॥१२१॥
अष्टमांशं पुनर्दत्वा पूर्वकल्कं च मर्दयेत् ।
दिनं निर्गुण्डिजैर्द्रावैस्तद्गोलं लेपयेद्बहिः ॥१२२॥
कार्पासपत्रकल्केन रुध्वा गजपुटे पचेत् ।
एवं पुनः पुनः कुर्यान्मर्दनं पुटपाचनम् ॥१२३॥
म्रियते कुङ्कुमाभं तन्नागं दशपुटैः क्रमात् ।
अनेन चाष्टमांशेन द्रुतं शुल्वं तु वेधयेत् ॥१२४॥
तेन शुल्वेन तारं तु अष्टमांशेन वेधयेत् ।
जायते कनकं शुल्वं देवाभरणमुत्तमम् ।
नागरंजनमिदं विशेषतः शुल्वसूतरविचन्द्रवेधनम् ।
धर्मकामसुखभाजनैर्जनैः साध्यतामखिललोकरक्षणे ॥१२५॥

इतिश्री पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके रंजनादि चंद्रार्कवेधनं नाम षष्ठोपदेशः ॥ ६ ॥

---

# ॥ अथ श्री वादिखंडे सप्तमोपदेशः ॥

धातुसत्त्वयुतपिष्टिकाक्रमस्तंभनं च निगडेन लेपनं ।
खोटबन्धकृतविद्रुतिं तथा वेधयुक्तिरखिला निगद्यते ॥१॥

॥ पिष्टिगोलं ॥

दिव्यौषधद्रवैर्मर्द्यं तप्तखल्वे दिनत्रयम् ।
शुद्धं सूतं ततो धर्मे शोष्यं स्वच्छं समाहरेत् ॥२॥
स्वर्णनागार्ककान्तं च तीक्ष्णं वङ्गं च रूप्यकम् ।
यथेष्टैकं विचूर्ण्यादौ व्योमसत्त्वमथापि वा ॥३॥
पूर्वसूतेन संतुल्यं याममम्लेन मर्दयेत् ।

महारसाष्टकादेकं सूततुल्यं विनिक्षिपेत् ॥४॥
दिव्यौषधीद्रवैरेव यामात्स्विन्नातपे खरे ।
मर्दयेत्खल्वके गाढं तद्गोलं वस्त्रवेष्टितम् ॥५॥
गन्धतैले दिनं पच्यात्ततो वस्त्रात्समुद्धरेत् ।
पिष्टिगोलमिदं ख्यातं तथान्यमतमुच्यते ॥६॥

पिष्टीगोलं

पूर्वं यन्मर्दितं सूतं तस्य भागत्रयं भवेत् ।
नागद्वयं यथेष्टैकं तस्मिन्नागं विनिक्षिपेत् ॥७॥
वैक्रान्तं कुण्डगोलं च दिव्यौषधिद्रवं तथा ।
मर्द्यं यामत्रयं खल्वे छायाशुष्कं तु गोलकम् ॥८॥
कृत्वाथ बन्धयेद्वस्त्रे गन्धतैले दिनं पचेत् ।
वस्त्रमध्यात्समुद्धृत्य पिष्टिगोलमिदं भवेत् ॥९॥

पिष्टीगोलस्य निगडः १

अथास्य पिष्टिगोलस्य निगडः प्रोच्यते शुभः ।
गुग्गुलुं ब्रह्मबीजानि तैस्तुल्यं चैव सैन्धवम् ॥१०॥
स्नुह्यर्कपयसा मर्द्यं निगडोऽयं महोत्तमः ।

निगडः २

पालाशं कोकिलाक्षस्य बीजानि सैन्धवं तथा ॥११॥
उन्मत्तनीलिजैर्द्रावैर्मर्द्यः स्यान्निगडोत्तमः ।

निगडः ३

अभ्रकं सैन्धवं ताप्यं वालूमृल्लोहकिट्टकम् ।
स्नुह्यर्कपयसा पिष्टं यामान्ते निगडो भवेत् ॥१२॥

निगडः ४

बाकुचीब्रह्मधत्तूरबीजानि चाम्लवेतसम् ॥१३॥
काकविट्कदलीकन्द तालगन्धमनःशिला ।
गुग्गुलुं पंचलोणानि गोजिह्वा कोकिलाक्षकम् ॥१४॥
तिक्तकोशातकी नीली विषमुष्टीन्द्रवारुणी ।
जीरद्वयं कर्कटास्थि स्त्रीरजोमूत्रमिश्रितम् ॥१५॥
स्नुह्यर्कक्षीरतैलैश्च मर्द्यं यामद्वयं दृढम् ।
व्यस्तं वाथ समस्तं वा निगडोऽयं महोत्तमः ।

एतेष्वेकेन तद्गोलं लेप्यमङ्गुलमात्रकम् ॥१६॥

रसखोटः १

मूषायां बिल्वमात्रायां लोणं किंचिदधः क्षिपेत् ॥१७॥
लिप्तं गोलं क्षिपेत्तस्यामूर्ध्वं लोणं च दापयेत् ।
रुध्वा मृल्लवणैः सन्धिं सर्वतो दग्धशङ्खकैः ॥१८॥
मूषालेपः प्रकर्तव्यः छायाशुष्कं तु कारयेत् ।
करीषाग्नौ दिवारात्रौ त्रिरात्रं वा तुषाग्निना ॥१९॥
मृदुना स्वेदयेत्पश्चात्समुद्धृत्याथ लेपयेत् ।
सम्यङ्निगडकल्केन पूर्वमूषां निरोधयेत् ॥२०॥
ऊर्ध्वाधो लवणं दत्वा रुध्वा लेप्या च पूर्ववत् ।
छायाशुष्कं धमेद्गाढं रसो भवति खोटतां ॥२१॥
सौवीरं टङ्कणं काचं दत्वा दत्वा धमेद् दृढम् ।
तच्छुद्धं जायते खोटमभीक्ष्णं नात्र संशयः ॥२२॥
इत्येवं सर्वसत्त्वैश्च पिष्टिकां कारयेत्पृथक् ।
पूर्ववत्क्रमयोगेन खोटो भवति तद्रसः ॥२३॥

रसखोटः २

भागद्वयं सुवर्णस्य त्रिभागं पारदस्य च ।
पूर्ववत्कारयेत्पिष्टीं तद्वत्खोटं च शोधयेत् ॥२४॥
इत्येवं पिष्टिखोटानि कृत्वा सर्वत्र योजयेत् ।

रसखोटस्य बिडवट्या जारणम्

तत्खोटं स्वर्णसंतुल्यं समावर्तं तु कारयेत् ।
माक्षिकं कान्तपाषाणं शिलागन्धं समं समम् ॥२५॥
भूनागैर्मर्दयेद्यामं चणमात्रवटीकृतम् ।
एषा बिडवटी ख्याता योज्या सर्वत्र जारणे ॥२६॥
एकैकं वाहयेत्सूते धाम्यमाने पुनः पुनः ।
एवं दशगुणं हेम जारयेत्तत्क्रमेण तु ॥२७॥
प्रकाशमूषागर्भे तु ग्रसते वडवानलः ।

सर्वधातुवेधः

माक्षिकं दरदं गन्धं राजावर्तं प्रवालकम् ।
शिला तुत्थं च कङ्कुष्ठं समं चूर्णं प्रकल्पयेत् ॥२८॥

वर्गाभ्यां पीतरक्ताभ्यां कङ्गुणीतैलकैः सह ।
भावयेद्दिवसान्पंच सूर्यतापे पुनः पुनः ॥२९॥
जारितं सूतखोटं तु कल्केनानेन संयुतम् ।
वालुका हण्डिमध्यस्थं श्रावसंपुटमध्यगम् ॥३०॥
त्रिदिनं पाचयेच्चुल्यां कल्कं देयं पुनः पुनः ।
रञ्जितो जायते सूतः शतवेधी न संशयः ॥३१॥
तारे ताम्रे भुजङ्गे वा चन्द्रार्के वाऽथ योजयेत् ।
जायते कनकं दिव्यं जाम्बूनदसमप्रभम् ॥३२॥

**अथवा पिष्टिखोटस्य साहश्य जारणं च विना द्रवेणाह ।**
**रसखोट द्रावणम् अथवा पिष्टीखोटस्य जारणं विना द्रावण माह ।**

पिष्टिखोटं सूक्ष्मचूर्णं स्त्रीपुष्पेण तु भावयेत् ।
दिनत्रयं खरे घर्मे शुक्तौ वा नालिकेरजे ॥३३॥
मीनाक्षी कदलीकन्दं श्वेता रक्ता पुनर्नवा ।
शिलाजतु ससिन्धूत्थं नारीपुष्पेण मर्दयेत् ॥३४॥
पूर्ववद्द्रावितं खोटं तस्मिन्पिण्डे विनिक्षिपेत् ।
पूर्ववद्द्रावितं खोटं तस्मित्पिंडं विनिक्षिपेत् ॥ ॥३५॥
मुखं तत्पिण्डकल्केन रुध्वा पिण्डं च बन्धयेत् ।
भूर्जपत्रे त्र्यहं पच्याद्दोलायन्त्रे सकाञ्जिके ॥३६॥
द्रुतं सूतं भवेत्साक्षात्पुनस्तस्मिंश्च दापयेत् ।
पूर्ववद्द्रावितं खोटं खोटपादं पुनः पुनः ॥३७॥
निक्षिपेत्पूर्वपिण्डे तु तद्वत्पच्याद्दिनत्रयम् ।
एवं पुनः पुनर्देयं पिष्टिं खोटं सुभावितम् ॥३८॥
आरोटस्य समं यावत्तावद् देयं द्रुतं भवेत् ॥

रसद्रावणम्

आर्द्रकं मूलकं शुण्ठी लशुनं हिङ्गुमाक्षिकम् ॥३९॥
त्रिक्षारं पंचलवणं कांक्षी कासीसगन्धकम् ।
अम्लवर्गेण संयुक्तं मर्द्यं पिण्डं तु कल्पयेत् ॥४०॥
तस्मिन् पिण्डे यथा पूर्वं द्रुतं सूतं तु कारयेत् ।
मार्जारी चेश्वरी गुञ्जा कुक्कुटी क्षीरकन्दकम् ॥४१॥

एतेषां पिण्डमध्ये तु पूर्ववद्धावयेद्रसम् ।
द्रुतसूतमिदं ख्यातं सर्वकर्मसु योजयेत् ॥ ॥४२॥

तार ताम्रवेधः द्रुतसूत गोलः

द्रुतसूतस्य भागौ द्वावेकं कृष्णाभ्रसत्वकम् ।
भागं रसकसत्त्वस्य कृष्णोन्मत्तद्रवैर्दिनम् ॥४३॥
मर्दितं कारयेद्गोलं गोलपादं मृतं पविम् ।
दत्वाथ मर्दयेद्यामं सर्वमुन्मत्तवारिणा ॥४४॥
रुध्वाथ भूधरे पच्यात्पुटैकेन समुद्धरेत् ।
पूर्वांशं द्रुतसूतं तु तं दत्वा मर्दयेत्पुनः ॥४५॥
धत्तूरोत्थद्रवैर्यामं तद्वत्पच्याच्च भूधरे ।
इत्येवं सप्तवाराणि सूतं दत्वा पुनः पुनः ॥४६॥
भूधरे पाचयेद्यन्त्रे भस्मीभवति तद्रसः ।
तेनैव शतभागेन क्षौद्रेण सह पेषयेत् ॥४७॥
चन्द्रार्कजातपत्राणि अन्धमूषागतं धमेत् ।
स्वर्णं भवति रूपाढ्यं जाम्बूनदसमप्रभम् ॥४८॥

नागवेधः

तद्भस्म गन्धकं तुल्यमन्धमूषागतं धमेत् ।
वेध्यं तेन शतांशेन नागं भवति काञ्चनम् ॥४९॥

चन्द्रार्कवेधः

रसकाभ्रकयोः सत्वं द्रुतं सत्वं समं समम् ।
त्रयाणां पलमेकं तु सिद्धचूर्णेन संयुतम् ॥५०॥
मर्द्यमुन्मत्तकद्रावैर्दिनैकं चांधितं धमेत् ।
तत्खोटं चूर्णितं मर्द्यं मातुलुङ्गाम्लगन्धकैः ॥५१॥
रुध्वा गजपुटे पच्यादेवं वारांस्त्रयोदश ।
मर्द्यं मर्द्यं पचेद्रुध्वा आरण्योत्पलकैः क्रमात् ॥५२॥
चन्द्रार्कशतभागेन मधुनाक्तेन तेन वै ।
लिप्त्वा रुध्वा धमेद्गाढं स्वर्णं भवति शोभनम् ॥५३॥

ताम्रवेधः

रसकाभ्रकयोः सत्वं द्रुतसूतं च टङ्कणम् ।

सर्वमेतत्समं मर्द्यं कृष्णोन्मत्तद्रवैर्दिनम् ॥५४॥
छायाशुष्कां वटीं कृत्वा महदग्निगतां धमेत् ।
तत्खोटं शोधयेत्पश्चात्सितकाचेन टङ्कणैः ॥५५॥
स्वर्णेन च समावर्त्य समेन जारयेत्ततः ।
पूर्वा बिडवटी या तु तामेकैकां प्रदापयेत् ॥५६॥
धमन्प्रगटमूषायां यावत्सूतावशेषितम् ।
ततः शुद्धसुवर्णेन सारयेत्सारणात्रयम् ॥५७॥
वेध्यं तेन शतांशेन शुल्बं भवति काञ्चनम् ।

तारवेधः

भागैकं द्रुतसूतस्य सारणा यन्त्रके क्षिपेत् ॥५८॥
तस्माच्चतुर्गुणं नागं शुद्धं तद्द्रावितं पृथक् ।
तस्मिन्यन्त्रे विनिक्षिप्य जातं खोटं समाहरेत् ॥५९॥
तत्तुल्यं माक्षिकं शुद्धमेकीकृत्य विमर्दयेत् ।
दिनं धत्तूरजैर्द्रावैर्मृद्भाण्डे पाचयेत्ततः ॥६०॥
यावत्कुङ्कुमवर्णं स्यात्तावच्चुल्यां समुद्धरेत् ।
एतस्यैव पलैकं तु सिद्धचूर्णेन संयुतम् ॥६१॥
रुध्वा ध्माते भवेत्खोटं मध्वम्लैर्मर्दयेद्दिनम् ।
आरण्योत्पलकैरेव रुध्वा मधुपुटैः पचेत् ॥६२॥
अनेन मधुयुक्तेन तारपत्राणि लेपयेत् ।
रुध्वा धाम्यं पुनर्लेप्यं त्रिभिर्वारैस्तु काञ्चनम् ॥६३॥
जायते दिव्यरूपाढ्यं सत्यं शंकरभाषितम् ।
माक्षिकस्य त्वभावे तु वैक्रान्तं वात्र योजयेत् ॥६४॥

तारवेधः

द्रुतसूतं हिङ्गुलं च कङ्कुष्ठं गन्धकं शिला ।
एकद्वित्रिचतुःपंचपलानि क्रमतो भवेत् ॥६५॥
गोपित्तेन तु तत्सर्वं मर्द्यं यामचतुष्टयम् ।
शुद्धानि नागपत्राणि समेमानेन लेपयेत् ॥६६॥
रुध्वा गजपुटे पच्यात्समुद्धृत्याथ मर्दयेत् ।
समेन पूर्वकल्केन रुध्वा तद्वत्पुटे पचेत् ॥६७॥

एवं शतपुटैः पक्वो म्रियते पन्नगो ध्रुवम् ।
अनेन शतभागेन तारवेधात्तु काञ्चनम् ॥६८॥

तारवेधः

तेन वा मृतनागेन ह्यम्लपिष्टेन लेपयेत् ।
समांशं स्वर्णपत्रं तु रुध्वा गजपुटे पचेत् ॥६९॥
नागं पुनः पुनर्देयमेवं देयं पुटत्रयम् ।
अनेन मृतहेम्ना तु द्रुतं तारं तु वेधयेत् ॥७०॥
सहस्रांशेन तत्सिद्धं दिव्यं भवति कांचनम् । ॥७१॥

खोटबद्धरसः

द्रवैस्तूम्बरुवल्यास्तु धान्याभ्रं सप्तधाऽतपे ।
भावयेत्खोटयेत्पश्चात् कर्षैके द्रुतसूतके ॥७२॥
माषमात्रं क्षिपेदेतत्तप्तखल्वे त्रिमर्दयेत् ।
गोस्तनाकारमूषायां क्षिप्त्वा मृद्वग्निना पचेत् ॥
वालुकायंत्रमध्ये तु जीर्णे वाप पुनः क्षिपेत् ।
इत्येवं जारयेत्तुल्यं खोटबद्धो भवेद्रसः ॥७३॥

खोटबद्धरसेन ताम्रवेधः

अस्य बद्धस्य माषैकं माषार्धं शुद्धहाटकम् ।
शुद्धसूतस्य माषार्धं सर्वमेकत्र मर्दयेत् ॥७४॥
त्रिदिनं मातुलुंगाम्लैरेतत्कल्केन लेपयेत् ।
कर्षैकं नागपत्राणि वृश्चिकाल्यास्तथा द्रवैः ॥७५॥
लिप्त्वा तत्पातनायंत्रे पाचयेद्दिवसत्रयम् ।
........................पिष्ट्वा दिनावधि ॥७६॥
अनेन तारपत्राणि कर्षमेकं प्रलेपयेत् ।
पूर्ववत्पातनायंत्रे पाचयेद्दिवसत्रयम् ॥७७॥
अनेनैव द्रुतं शुल्बं सहस्रांशेन वेधयेत् ।
जायते कनकं दिव्यं देवाभरणभूषणम् ॥७८॥

तारताम्रवेधो कल्कः

क्षीरेणोत्तरवारुण्यास्त्रिदिनं शुद्धपारदम् ।
मर्दयेत्तप्तखल्वे तु वज्रमूषांधितं पुटेत् ॥

करीषाग्नौ दिवारात्रौ त्रिदिनं वा तुषाग्निना ।
समुद्धृत्य पुनर्मर्द्यं तद्वद्बध्वाथ पाचयेत् ॥८०॥
तद्वन्मर्द्यं पुनः पाच्यं म्रियते पाण्डुरो रसः ।
आर्द्रकं तुवरी सिन्धु कङ्गुणीतैलकं मधु ॥८१॥
अम्लवेतसमेतैस्तु तद्रसं मर्दयेद्दिनम् ।
गोलकं बन्धयेद्वस्त्रे दोलायंत्रे त्र्यहं पचेत् ॥८२॥
कंगुणीतैलमध्ये तु बद्धो भवति तद्रसः ।
तद्रसं हाटकं नागं समं रुध्वा धमेद्दृढम् ॥८३॥
तत्खोटं सूक्ष्मचूर्णं तु चूर्णांशं द्रुतसूतकम् ।
अम्लमर्द्यं भवेद्गोलं कांजिकैः स्वेदयेद्दिनम् ॥८४॥
गंधकस्य त्रयो भागा गंधतुल्यं सुवर्चलम् ।
कृष्णाभ्रकं तु भागैकं सर्वं स्तन्येन पेषयेत् ॥८५॥
अनेन लेपितं गोलं अंधमूषागतं धमेत् ।
यावत् सूतावशेषं स्यात्तावद्धाम्यं पुनः पुनः ॥८६॥
पूर्वचूर्णं पुनर्दत्वा तद्वज्जार्यं क्रमेण तु ।
इत्येवं हाटकं यावज्जारितं त्रिगुणं भवेत् ॥८७॥
स्वर्णेन च समावर्त्य सारणात्रयसारितम् ।
चंद्रार्कं वेधयेत्तेन शतांशात्कांचनं भवेत् ॥८८॥

ताम्रवेधो कल्कः

पिष्टीखोटसमं स्वर्णं स्वर्णतुल्यं च पन्नगम् ।
कान्तलोहं व्योमसत्वं एकैकं पन्नगार्धकम् ॥८९॥
एकीकृत्य धमेत्तावद्यावत्स्वर्णावशेषितम् ।
दत्वा बिडवटीं चैव सारयेत्सारणात्रयम् ॥९०॥
शतांशेन ह्यनेनैव शुल्बं भवति काञ्चनम् ॥

तारताम्रवेधी कल्कः

सुवर्णं रजतं ताम्रं कांतं तीक्ष्णं च माक्षिकम् ।
कृष्णाभ्रकस्य सत्वं च समं रुध्वा धमेद् दृढम् ॥९१॥
तत्खोटं सूक्ष्मचूर्णं तु पादांशं द्रुतपारदम् ।
दत्वाथ मर्दयेदम्लैर्यावद्भवति गोलकम् ॥९२॥

गोलकस्य चतुर्भागा भागैकं मृतवज्रकम् ।
मर्दयेत्तप्तखल्वे तु दिनैकं कन्यकाद्रवैः ॥९३॥
रुध्वाथ भूधरे पच्यादिनांते तु समुद्धरेत् ।
तन्मध्ये द्रुतसूतं च पुनः कन्यासु मर्दयेत् ॥९४॥
पूर्ववद् भूधरे पच्यादेवं देयं तु सप्तधा ।
द्रुतसूतं क्रमेणैव मर्दनं च पुटं तथा ॥९५॥
तद्भस्म गंधतुल्यं च ह्यंधमूपागतं धमेत् ।
जायते खोटबद्धं तु रंजनं चास्य कथ्यते ॥९६॥
कृष्णाभ्रसत्वं बंगं च द्वंद्वं मेलापयेद् द्रुतम् ।
तुल्यांशमंधमूषायां ध्मातं खोटं भवेत्तु तत् ॥९७॥
तत्खोटं पलमेकं तु सिद्धचूर्णेन संयुतम् ।
मर्दयेद् गंधकाम्लेन रुध्वा गजपुटे पचेत् ॥९८॥
पुनर्मर्द्य पुनः पाच्यं एवं वारांश्चतुर्दश ।
अनेन पूर्वखोटे तु द्रावितं रंजयेत्क्रमात् । ॥९९॥
रंजयेच्छतवाराणि भवेत्कुंकुमसन्निभम् ।
सुवर्णन समावर्त्य सारयेत्सारणात्रयम् ॥१००॥
सहस्रांशेन तेनैव ताराशिष्टं च वेधयेत् ।
चन्द्रार्कं ताप्यशुल्वं तु दिव्यं भवति कांचनम् ॥१०१॥

नागस्य रौप्यस्य च वेधकरः कल्कः

तीक्ष्णं शुल्वं समं चूर्ण्य वज्रमूषांधितं धमेत् ।
तत्खोटं पलमेकं तु सिद्धचूर्णेन संयुतम् ॥१०२॥
मर्दयेद् गंधकाम्लेन रुध्वा गजपुटे पचेत् ।
पुनर्मर्द्य पुनः पाच्यमेवं वारांश्चतुर्दश ॥१०३॥
तद्देयं द्राविते स्वर्णे शतवारं पुनः पुनः ।
पक्वबीजं भवेत्तत्त द्रुतसूते समं दिनम् ॥१०४॥
मर्दयेदम्लयोगेन तस्य भागचतुष्टयम् ।
एवं वज्रस्य भागैकं तप्तखल्वे दिनावधि ॥१०५॥
मर्दयेत् कन्यकाद्रावैस्तद्रुध्वा भूधरे पचेत् ।
द्रुतसूतं पुनस्तुल्यं दत्वा मर्द्य पुटे ततः ॥१०६॥

इत्येवं सप्तधा देयं द्रुतसूतं पुटांतकम् ।
ततस्तं मर्दयेदम्लै रुध्वा मूषां पुटेत्तथा ॥१०७॥
पुनर्मर्द्यं पुनः पाच्यं षष्ट्याधिकशतत्रयम् ।
पुटं देयं प्रयत्नेन जायते सिन्दुरप्रभम् ॥१०८॥
सहस्रांशेन नागस्य द्रुतस्य रजतस्य च ।
देयो वेधो भवेत्स्वर्णं दिव्याभरणमुत्तमम् ॥१०९॥

तारवेधः

गंधकं सूक्ष्मचूर्णं तु चणकाम्लेन भावयेत् ।
शतवारं प्रयत्नेन स्त्रीपुष्पेण तु सप्तधा ॥११०॥
द्रुतपारदमध्ये तु किंचित्कर्पूरसंयुतम् ।
गंधकं दापयेद् घर्मे वापयेत्ताम्रखल्वके ॥१११॥
कर्पूरं गंधकं चैव किंचित्किंचित्पुनः पुनः ।
त्रिसप्ताहं प्रदातव्यं जायते गन्धपिष्टिका ॥११२॥
कटुकोशातकीवीजं चाण्डालीकन्दसंयुतम् ।
स्तन्येन पेषितं तुल्यं पिष्टीं तेन प्रलेपयेत् ॥११३॥
बाह्ये तु मृत्तिका लेप्या सर्वतोंगुलमात्रकम् ।
शोषितं भूधरे पच्यादूर्ध्वाधः परिवर्तयेत् ॥११४॥
जायते स्तंभितं गोलं समुद्धृत्याथ तं पुनः ।
तुल्यांशे संपुटे हेम्नि लिप्त्वा मूषांधितं धमेत् ॥११५॥
अनेन चाष्टमांशेन तारे वेधं प्रदापयेत् ।
तत्तारं जायते दिव्यं जाम्बूनदसमप्रभम् ॥११६॥

चंद्रार्कवेधः

अथवा स्तंभितं गोलं स्वर्णं संपुटवर्जितम् ।
तस्यैव भागाश्चत्वारो भागैकं मृतवज्रकम् ॥११७॥
मर्दयेत्कन्यकाद्रावैर्दिनमेकं ततः पुनः ।
अंधितं भूधरे पच्याद्यावद्यामचतुष्टयम् ॥११८॥
समुद्धृत्य पुनस्तस्मिन्पूर्वांशं पूर्वसूतकम् ।
दत्वा मर्द्यं पुटेत्तद्वदेवं कुर्यात् त्रिसप्तधा ॥११९॥
तस्मिन्भस्मपलमेकं पारदं धकस्य तु ।

अंधमूषागतं ध्मातं तत्खोटं पन्नगं समम् ॥१२०॥
पन्नगस्य समं स्वर्णं त्रयाणां त्रिगुणं क्षिपेत् ।
द्रुतसूतं च तत्सर्वमम्लवर्गेण मर्दयेत् ॥१२१॥
दिनांते वज्रमूषायां रुध्वा धाम्यं प्रयत्नतः ।
जायते पन्नगं स्वर्णं त्रयोत्थं जायते क्रमात् ॥१२२॥
सारयेच्च त्रिधा हेम चन्द्रार्कं वेधयेत्ततः ।
सहस्रांशेन तेनैव दिव्यं भवति काञ्चनम् ॥१२३॥

सितस्वर्ण वेधः

हेमार्कतीक्ष्णचूर्णं च समं रुध्वा धमेद् दृढम् ।
तत्खोटं भागमेकं तु त्रिभागं द्रुतसूतकम् ॥१२४॥
मर्दयेद् गंधकाम्लेन रुध्वा सम्यक्पुटे पचेत् ।
पुनर्मर्द्यं पुनः पाच्यमेवं वारांश्चतुर्दश ॥१२५॥
अनेन शतमांशेन सितहेम च वेधयेत् ।
जायते कनकं दिव्यं कंगुणीतैलसेचनात् ॥१२६॥
बद्धे द्रुते रसवरे वरहेम्नि जीर्णे
दृष्टो मया दशगुणः सुखसाध्यलाभः ।
वज्रे मृते गगनसत्वयुते नराणां
तत्रैव भूरिगुणितं फलमस्ति सत्यम् ॥१२७॥

इतिश्री पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके द्रुतसूतप्रयोगो नाम सप्तमोपदेशः ॥ ७ ॥

———:o:———

# ॥ अथ श्री वादिखंडे अष्टमोपदेशः ॥

कार्पासार्ककरंज धूर्तमुनिजैर्भल्लातगुंजाग्निजैः
स्नुग्वज्रोपयसा च सूरणभवैर्द्रावैश्च मूलैः फलैः ।
तक्राक्तैर्बहुतप्तखर्परगतं बंगं निषिंच्यान्मुहु-
र्यावत्पञ्चदिनं तदेव विमलं वादे सदा योजयेत् ॥१॥

बंगनिर्मलीकरणम् ( बंगशोधनं )

अथवा बंगचूर्णं तु माषैर्भल्लातजैः फलैः ।
समं खल्वे दिनं मर्द्यं भल्लाततैलसंयुतम् ॥२॥

तत्पिण्डं माहिषे शृङ्गे क्षिप्त्वा रुध्वा महापुटे ।
पचेत्तस्मात्समुद्धृत्य पुनस्तद्वच्च मर्दयेत् ॥३॥
इत्येवं सप्तधा कुर्यात् खोटं पाकं च मर्दनम् ।
तद्वंगं मलनिर्मुक्तं स्तंभकर्मणि योजयेत् ॥४॥

बंगस्तंभनम् १

तीक्ष्णपाषाणसत्वं च द्रुतवंगे द्रुतं क्षिपेत् ।
चतुःषष्ठितमांशेन स्तंभमायाति निश्चितम् ॥५॥

बंगवेधः २

श्वेताभ्रं श्वेतकाचं च टंकणं शंखपुष्पिका ।
विषं च तुल्यतुल्यांशं चूर्णं भाव्यं त्रिसप्तधा ॥६॥
काकमाचीद्रवैः क्षीरैः स्नुह्यर्कैश्चातपे खरे ।
द्रुते बंगे प्रदातव्यं प्रतिवापं च सेचयेत् ॥७॥
पुत्रजीवोत्थतैलेन सप्तवारं पुनः पुनः ।
तत्तारं जायते दिव्यं यावच्चंद्रार्कतारकम् ॥८॥

बंगवेधः ३

श्वेताभ्रं श्वेतकाचं च विषसैंधवटंकणम् ।
स्नुहीक्षीरैर्दिनं मर्द्यं श्वेतबंगस्य पत्रकम् ॥९॥
लेप्यं पादांशकल्केन चांधमूषागतं धमेत् ।
आदाय द्रावयेद् भूमौ पूर्वतैलेन सेचयेत् ॥१०॥
पत्रादिलेपसेकं च सप्तवाराणि सेचयेत् ।
तद् बंगं जायते तारं शंखकुंदेन्दुसन्निभम् ॥११॥

बंगवेधः ४

समं तालं शिलां पिष्ट्वा देवदाल्या द्रवैर्दिनम् ।
द्रवैरीश्वरलिंग्याश्च दिनमेकं विमर्दयेत् ॥१२॥
नागं बंगं समं द्राव्यं तच्चूर्णं पलपञ्चकम् ।
पूर्वकल्केन संतुल्यं समालोड्यांधितं पुटेत् ॥१३॥
एवं पुनः पुनः पाच्यं पूर्वकल्केन संयुतम् ।
भवेत्षष्टिपुटैः सिद्धं बंगस्तंभकरं परम् ॥१४॥
शतमांशेन दातव्यं वेधात्तारं करोत्यलम् ॥१५॥

बंगवेधः ५

सूतकं तालमेकैकं नृकपालं द्विभागकम् ।
सर्वतुल्यं विषं योज्यं पंचांगं रक्तचित्रकात् ॥१६॥
विषतुल्यं क्षिपेच्चूर्णं वज्रीक्षीरेण भावितम् ।
मासमात्रं दिवारात्रौ तद्वापं षोडशांशतः ॥१७॥
दत्ते वारत्रयं वंगे तारं भवति शोभनम् ॥१८॥

बंगवेधः ६

गोरंभा ह्यौषुधी नाम नरमूत्रेण पेषयेत् ।
तेन पिण्डद्वयं कृत्वा तत्रैकस्योपरि क्षिपेत् ॥१९॥
क्षारत्रयस्य चूर्णं तु तत्पृष्ठे वंगचूर्णकम् ।
क्षारत्रयं ततो दत्वा पिण्डं तस्योपरि क्षिपेत् ॥२०॥
मुखं बध्वा पुटे पच्यात्स्वांगशीतं समुद्धरेत् ।
एवं वारत्रयं कुर्यात्तारं भवति शोभनम् ॥२१॥
वसंतेजायते सा तु गोरंभा पीतपुष्पिका ।
तस्या मध्यमकांडार्धे श्वेतकार्पासवद्भवेत् ॥२२॥
वसंतपुष्पिकां वापि तदभावे नियोजयेत् ।
वाला नाम समाख्याता कथ्या धूलीसमा तथा ॥२३॥

बंगवेधः ७

श्वेतपालाशकल्पः रौप्यकरणयोगाः

श्वेतपालाशपुष्पाणि छायाशुष्काणि चूर्णयेत् ।
एकविंशतिवारेण मेषीक्षीरेण भावयेत् ॥२४॥
तच्चूर्णं षोडशांशेन द्रुते वंगे प्रदापयेत् ।
तारं भवति रूपाढ्यं शंखकुन्देन्दुसन्निभम् ॥२५॥

बंगवेधः ८

तत्पुष्पं हरितालं च मेषीदुग्धेन पेषयेत् ।
तद्वापं षोडशांशेन द्रुते बंगे प्रदापयेत् ॥२६॥
तारं भवति रूपाढ्यं शंखकुन्देन्दुसन्निभम् ।

बंगवेधः ९

तक्रेण तानि पुष्पाणि भावयित्वा त्रिसप्तधा ॥२७॥

तेन कल्केन वंगस्य पत्राणि परिलेपयेत् ।
अंधमूषागतं धाम्यमेवं कुर्यात्रिसप्तधा ॥२८॥
तत्तार जायते दिव्यं धर्मकामफलप्रदम् ।

अगस्तिपत्ररसयोगेन बंगवेधः १०

रसो मूषकपाषाण फट्किरीनीलमंजनम् ॥२९॥
अगस्तिपत्रनिर्यासैः सर्वं मर्द्यं दिनावधि ।
भाण्डमध्ये निधायाथ पाचयेद्दीपवह्निना ॥३०॥
अगस्तिपत्रनिर्यासं जीर्णे जीर्णे प्रदापयेत् ।
दिनांते तत्समुद्धृत्य द्रुते वंगे प्रदापयेत् ॥३१॥
त्रिंशदंशेन तत्तारं जायते देवभूषणम् ।

बंगवेधः १२

तारेण द्वंद्वयेद्वज्रं स्वर्णेन द्वंद्वितं यथा ॥३२॥
अस्य द्वंद्वस्य भागौ द्वौ त्रिभागं शुद्धपारदम् ।
अम्लेन मर्दयेत्तावद्यावद्भवति गोलकम् ॥३३॥
मेषशृंग्यास्तु पंचांगं स्त्रीस्तन्येन तु पेषयेत् ।
अनेन वेष्टयेद् गोलं तद्बहिर्निंगडेन च ॥३४॥
स्वेदादिधमनांतं च कर्तव्यं हेमपिष्टिवत् ।
उत्तरावारुणीक्षीरैस्तत्खोटं च प्रलेपयेत् ॥३५॥
मूषामध्ये निधायाथ तारं दत्वा समं समम् ।
दत्वा बिडवटीं चैव धमेत्सूतावशेषितम् ॥३६॥
एवं पुनः पुनस्ताप्यमेकत्रिंशतिवारकम् ।
दत्वा समं समं जार्यं त्रिधा तारेण सारयेत् ॥३७॥
इदमेव सहस्रांशं द्रुते बंगे विनिक्षिपेत् ।
तद् बंगं जायते तारं बंगस्तंभं शिवोदितम् ॥३८॥

बंगवेधः १३

रक्तपारदभागैकं भागैकं शंखचूर्णकम् ।
श्वेताभ्रकस्य सत्वं च सम्यग्भागद्वयं भवेत् ॥३९॥
टंकणस्य च भागैकं सर्वमेतद्दिनत्रयम् ।
वज्रीक्षीरेण संमर्द्यमेवं वारांश्चतुर्दश ॥४०॥

अनेन शतमांशेन द्रुतं बंगं च वेधयेत् ।
स्तंभते नात्र संदेहस्तारं भवति शोभनम् ॥४१॥

बंगवेध १४

हेमसूताद्यथा जातं पिष्टीखाटं तु शोभनम् ।
तथैव तारसूतेन पिष्टीखोटं तु कारयेत् ॥४२॥
तत्खोटं तारबंगं च सत्वं श्वेताभ्रजं समम् ।
जार्यं बिडवटीं दत्वा यावत्खोटावशेषितम् ॥४३॥
जारणेन त्रिधा सार्यं द्रुते शुल्वे नियोजयेत् ।
शतांशेन तु तत्तारं जायते शंभुभाषितम् ॥४४॥

बंगवेधः १५

द्रुतं सूतं तीक्ष्णचूर्णं समांशं तप्तखल्वके ।
टंटूछल्लीद्रवैर्मर्द्यं यावद्भवति गोलकम् ॥४५॥
गोलकस्य चतुर्भागा भागैकं मृतवज्रकम् ।
तप्तखल्वे दिनं मर्द्यं टंटूछल्लीरसैर्नवैः ॥४६॥
अंधितं भूधरे पच्याद्दिनांते तत्समुद्धरेत् ।
पूर्वतुल्यं द्रुतं सूतं दत्वा मर्द्यं च पूर्ववत् ॥४७॥
पूर्ववद् भूधरे पच्यादित्येवं सप्तधा क्रमात् ।
द्रुतसूतं प्रदातव्यं मर्दनं च पुटं क्रमात् ॥४८॥
अनेन षोडशांशेन द्रुतं बंगं तु वेधयेत् ।
जायते दिव्यरूपाढ्यं तारं कुंदेन्दुसन्निभम् ॥४९॥

बंगवेधः १६

षोडशांशेन यद्दत्तं बंगं तस्यापरो विधिः ।
तत्तुल्यं गंधकं रुध्वा ध्माते खोटं प्रजायते ॥५०॥
तत्खोटं तीक्ष्णचूर्णं च समभागं प्रकल्पयेत् ।
ताभ्यां तुल्यं द्रुतं सूतं तत्सर्वं तप्तखल्वके ॥५१॥
मर्दयेट्टंटुजद्रावैर्यावद्भवति गोलकम् ।
रुध्वाथ भूधरे पच्यादहोरात्रात्समुद्धरेत् ॥५२॥
पूर्वांशं द्रुतसूतं च दत्वा तद्वच्च मर्दयेत् ।
तं रुध्वा च पुटेत्तद्वदेवं कुर्यात्त्रिसप्तधा ॥५३॥

अंधमूषागतं ध्माप्यं तत्खोटं जायते रसः ।
तुल्येन तीक्ष्णचूर्णेन मर्दयेच्चांधितं धमेत् ॥५४॥
अनेन क्रमयोगेन तीक्ष्णं देयं पुनः पुनः ।
यावत्सप्तगुणं तीक्ष्णं दत्वा दत्वा धमेद्धि तत् ॥५५॥
तं खोटं सारयेत्पश्चात्क्षारेणैव त्रिधा क्रमात् ।
लक्षांशेनैव तेनैव बंगवेधं प्रदापयेत् ।
शंखकुंदेन्दुसंकाशं तारं भवति शोभनम् ॥५६॥

तामस्य रौप्यम् १

मधुसंजीवनी पिष्ट्वा गर्दभस्य तु मूत्रतः ।
सप्ताहं तेन मूत्रेण भावयित्वा ततः पुनः ॥५७॥
तेनैव मर्दयेत्सूतं तप्तखल्वे दिनत्रयम् ।
तत्तुल्यं गंधकं दत्वा ह्यंधमूषागतं धमेत् ॥५८॥
तत्खोटं जायते दिव्यं रंजनं तस्य कथ्यते ।
बंगं श्वेताभ्रसत्वं च द्वंद्वमेलापसंयुतम् ॥५९॥
मूषामध्ये तु तत्खोटं पलमात्रं विचूर्णयेत् ।
मर्दयेद् गंधकाम्लेन रुध्वा गजपुटे पचेत् ॥६०॥
पुनर्मर्द्यं पुनः पाच्यमेवं वारांश्चतुर्दश ।
अनेन पूर्वखोटं तु रंजयेत्सप्तवारकम् ॥६१॥
यथा बंगाभ्रकेनैव तथा नागाभ्रकैः पुनः ।
रंजयेत्सप्तवाराणि सूक्ष्मचूर्णं तु कारयेत् ॥६२॥
द्रुतसूतेन संयुक्तं द्रावयेत्पूर्ववत्क्रमात् ।
द्रुतस्य जारयेत्तारं दोलास्वेदेन यत्नतः ॥६३॥
त्रिषड्गुणं यदा तारं जीर्णं भवति पारदे ।
सारयेत्सारणास्तिस्रः सहस्रांशेन वेधयेत् ॥६४॥
द्रुतं शुल्बं भवेत्तारं शंखकुन्देन्दुसन्निभम् ॥६५॥

ताम्रस्य तारम्

श्वेताभ्रकस्य सत्वं तु कान्तसत्वं तथायसम् ।
बंगं तारं च वैक्रांतं कदंबं नागमेव च ॥६६॥
तुल्यांशमंधमूषायां ध्माते खोटं विचूर्णयेत् ।

द्रुतसूतेन संमर्द्य यावदम्लेन गोलकम् ॥६७॥
गोलकस्य चतुर्भागा भागैकं मृतवज्रकम् ।
मर्दयेत्तप्तखल्वे तु दिनैकं कन्यकाद्रवैः ॥६८॥
रुध्वाथ भूधरे पच्यादेवं कुर्यात्रिसप्तधा ।
तत्तुल्यं गंधकं दत्वा चांधमूषागतं धमेत् ॥६९॥
रजतेन समावर्त्य सारणात्रयसारितम् ।
सहस्रांशेन शुल्बस्य द्रुतस्योपरि दापयेत् ॥७०॥
तत्तारं जायते दिव्यं पुटे दत्ते न हीयते ॥७१॥

ताम्रस्य बंगस्य च वेधः ३

वज्रेण सारितं यत्तु सूतभस्म पुराकृतम् ।
तेनैव चाम्लपिष्टेन तारपत्रं चतुर्गुणम् ॥७२॥
लिप्त्वा रुध्वा पुटे पच्यात्समुद्धृत्याथ मर्दयेत् ।
पादांशं भस्मसूतं च दत्वा रुध्वा पुटे पचेत् ॥७३॥
एवं चतुःपुटैः पक्वं तत्तारं म्रियते ध्रुवम् ।
तेनैव षोडशांशेन द्रुतं ताम्रं तु वेधयेत् ॥
अथवा द्रावितं बंगं तारं भवति शोभनम् ॥७४॥

ताम्रस्य तारं ४

तारवन्मारयेद् बंगं तेन ताम्रं तु वेधयेत् ।
तत्तारं जायते दिव्यं षोडशांशे न संशयः ॥७५॥

ताम्रस्य तारं ५

शुद्धसूतसमां राजीं मर्दयेत्कन्यकाद्रवैः ।
त्रिदिनं तप्तखल्वे तु तत्सूतं खर्परोदरे ॥७६॥
चूल्यां चण्डाग्निना पाच्यं प्रक्षिपेत्कन्यकाद्रवैः ।
त्रिदिनांते समुद्धृत्य सैन्धवं तच्चतुर्गुणम् ॥७७॥
दत्वा विमर्दयेद्यामं पातनायंत्रके पचेत् ।
चतुर्यामात्समुद्धृत्य क्षालयेदारनालकैः ॥७८॥
अधःस्थितं समादद्यात् शुद्धः स्यात्पारदः शुभः ।
एतत्सूतं मृतं बंगं श्वेताभ्रसत्वटङ्कणम् ॥७९॥
विषं च तुल्यतुल्यांशं तालसत्वं चतुःसमम् ।

मर्द्यं स्नुह्यर्कसत्वाभ्यां खल्वके दिवसत्रयम् ॥८०॥
तद्वटीः काचकूप्यांतः क्षिप्त्वा कूपीं मृदा लिपेत् ।
सच्छिद्र वालुकायंत्रे हंडीं मंदाग्निना पचेत् ॥८१॥
शुष्के द्रावे मुखं रुध्वा शनैर्यामाष्टकं पचेत् ।
स्वांगशीतं समुद्धृत्य द्रुतं शुल्वं तु वेधयेत् ॥
चतुःषष्ठितमांशेन तारं भवति शोभनम् ॥८२॥

तार करणम् ६

पलं सूतं पलं तालं तालस्थानेथवा शिला ।
कृष्णोन्मत्तद्रवैर्मर्द्यं त्रिदिनांते समुद्धरेत् ॥८३॥
वज्रमूपागतं रुध्वा चक्रयंत्रे दिनं पचेत् ।
पुनर्मर्द्यं पुनः पाच्यमेवं सप्तविधे कृते ॥८४॥
तन्मृतं बंगतारार्कैः क्रमेणावेष्टयेत्समैः ।
रुध्वा तीव्राग्निना धाम्यं तारं भवति शोभनम् ॥८५॥

ताम्रस्य तारं ७

शुद्धसूतत्रयो भागा भागैकं ताम्रपत्रकम् ।
स्त्रीस्तन्ये मर्दयेद्यामं जायते तारपिष्टिका ॥८६॥
बीजान्युत्तरवारुण्या स्त्रीस्तन्येन तु पेषयेत् ।
तेनैव लेपयेत्पिष्टीं वज्रमूषां निरोधयेत् ॥८७॥
दिनैकं भूधरे पच्यात्पुनर्लिप्त्वा च पाचयेत् ।
इत्येवं सप्तधा पाच्यं पिष्टीस्तंभो भवेद् दृढः ॥८८॥
द्वात्रिंशांशेन तेनैव शुल्वे वेधं प्रदापयेत् ।
दशांशं च क्षिपेत्तारं रौप्यं भवति शोभनम् ॥८९॥

तारजोटकः १

शृंगाटी शंखचूर्णं तु गौमूत्रैः सारनालकैः ।
पिष्ट्वा तत्कल्कमध्ये तु तप्तं तप्तं निषिंचयेत् ॥९०॥
शुल्वपत्रं भवेद्यावज्जीर्णं तच्च समुद्धरेत् ।
मध्वाज्यटंकणैः सार्धं मूषामध्ये गतं धमेत् ॥९१॥
तारार्धेन समावर्त्य शुद्धं तारं भवेत्तु तत् ॥९२॥

दलयोग्यताम्रकरणं ( ताम्रशुद्धिः )

अर्कापामार्गकदलीक्षारमम्लेन लोलितम् ।
तेन लिप्तं ताम्रपत्रं धाम्यं मूषागतं पुनः ॥९३॥
पत्रं कृत्वा प्रलिप्याथ तद्वद् धाम्यं पुनः पुनः ।
इत्येवं सप्तधा कुर्यात् वादे स्याद्दलयोग्यकम् ॥९४॥

दलयोग्य ताम्रकरणं २ ( ताम्रशुद्धिः )

अथवा ताम्रपत्राणि सुतप्तानि निषेचयेत् ।
लोणारनालमध्ये तु शतधा पूर्ववद्भवेत् ॥९५॥

दलयोग्य ताम्रं ३

पलाशमूलजं क्षारं फट्किरी चाम्लपेषितम् ।
ताम्रपत्राणि संलिप्य द्रावयेत्पत्रयेत्पुनः ॥९६॥
इत्येवं सप्तधा कुर्याद्दलयोग्यं भवेत्तु तत् । ॥९७॥

ताम्रस्य तारं ८

सुशुद्धं तालकं सूतं सामुद्रलवणं समम् ।
द्वियामं मर्दयेत्खल्वे नवभाण्डगतं पचेत् ॥९८॥
मन्दाग्नौ चालयेत्तावद्यावत्कृष्टिर्भवेत्तु तत् ।
ततः समुद्रलवणं तालांशं मर्दयेत्पृथक् ॥९९॥
यावच्चिटचिटीशब्दो निवर्तेत समाहरेत् ।
चूर्णितं मृण्मये यंत्रे लवणार्धमथो क्षिपेत् ॥१००॥
तत्पृष्ठे पूर्वत्रितयं तन्मध्ये लवणार्धकम् ।
क्षिप्त्वा मृल्लवणैः संधिं लिप्त्वा शुष्कं विचूर्णयेत् ॥१०१॥
यामद्वादशपर्यंतं भाण्डपृष्ठे दृढाग्निना ।
तत्सत्वं मृतसूताभं ऊर्ध्वलग्नं समाहरेत् ॥१०२॥
बध्वा वस्त्रेथ दंडाग्रे कुंतवेधं नियोजयेत् ।
दशांशे तु द्रुते ताम्रे ढालयेद्दधिगोमये ।
तारार्धेन समावर्त्य शंखकुन्देन्दुसन्निभम् ॥१०३॥

तारजोटकः २

इत्येवं मर्दयेन्नागं कान्तलोहाष्टभागकम् ।
मूषायां दृढलिप्तायां सर्वचूर्णं दृढं धमेत् ।

तत्खोटं समतारेण द्रावितं तारतां व्रजेत् ॥१०४॥

तारजोटकः ३

ताम्रायस्कांतनागं च चूर्णितं पूर्ववद्धमेत् ।
तारार्धेन समावर्त्य तारं भवति शोभनम् ॥१०५॥

तारजोटकः ४

तारं वंगं तथा कांस्यं समं द्राव्यं स टंकणम् ।
अस्य खोटस्य भागैकं त्रिभागं शुद्धताम्रकम् ॥१०६॥
समावर्त्यं कृतं खोटं समे तारे विमिश्रयेत् ।
तत्तारं जायते शुद्धं हिमकुंदेन्दुसन्निभम् ॥१०७॥

तालसत्वेन ताम्रवेधः

मुण्डलोहस्य चूर्णं तु ग्राहयेद्भागपञ्चकम् ।
तद्गर्भे तालसत्वं तु भागैकं सन्निवेशयेत् ॥१०८॥
टंकणं श्वेतकाचं च ऊर्ध्वं दत्वा निरोधयेत् ।
ध्मातं तीव्रं तु संचूर्ण्य पुनः सत्वं तु दापयेत् ॥१०९॥
काचं टंकणकं दत्वा मूषायां चांधितं धमेत् ।
इत्येवं पंचधा कुर्यात् सत्वं दत्वा पुनः पुनः ॥११०॥
तत्तुल्यं शुद्धतारं च मृतोत्थं बंगभस्मकम् ।
त्रितयं तु समावर्त्य ताम्रारे द्राविते समे ॥१११॥
वेधो देयो दशांशेन बीजं पादं च योजयेत् ।
तत्तारं जायते दिव्यं शंखकुंदेन्दुसन्निभम् ॥११२॥

तालसत्वेन ताम्रवेधः

शुद्धसूतं मृतं बंगं श्वेताभ्रं टंकणं समम् ।
तथा मूषकपाषाणं पंचानां च चतुर्गुणम् ॥११३॥
योजयेत्तालकं शुद्धं स्नुह्यर्कपयसा दृढम् ।
सर्वं दिनत्रयं मर्द्यं काचकूप्यां निवेशयेत् ॥११४॥
सम्यङ् मृद्वस्त्रलिप्तायां सुशुष्कायां पचेत्ततः ।
सच्छिद्रे वालुकायंत्रे कूप्यामारोपितं पचेत् ॥११५॥
शुष्के द्रवे मुखं रुध्वा लोणमृत्तिकया दृढम् ।
ततश्चण्डाग्निना पच्याद्यावत् षोडशयामकम् ॥११६॥

स्वांगशीतं समुद्धृत्य स्फोटयेत्काचकूपिकाम् ।
ऊर्ध्वलग्नं तालसत्वं संग्राह्य तेन वेधयेत् ॥११७॥
षोडशांशेन शुल्वं तु ढालयेद्दधिगोमये ।
ततः शुद्धेन तारेण समावर्त्य समेन तु ॥
तत्तारं जायते शुद्धं हिमकुंन्देन्दुसन्निभम् ।

ताम्रस्य तारं

तालकं साबुणीतुल्यं पिष्ट्वा भ्रष्टं च खर्परे ॥११८॥
चालयन्नेव लब्धाग्नौ यावत्कृष्णं भवेत्तु तत् ।
मृल्लिप्तकाचकूप्यांतः क्षिप्त्वा तस्यां क्षिपेत्पुनः ॥११९॥
भर्जितं लवणं चैव तालकाद्दशमांशकम् ।
पूर्ववद्वालुकायंत्रे पक्त्वा सत्वं समाहरेत् ॥ ॥१२०॥
साबुणीसत्वपादांशं दत्वा पिष्ट्वा पचेत्पुनः ।
पूर्ववद् वालुकायंत्रे कूपिकामष्टयामकम् ॥१२१॥
तत्सत्वं तिलतैलं च समांशे पिशिते पचेत् ।
चालयेल्लोहपात्रे तु तैलं यावत्तु जीर्यते ॥१२२॥
इत्येवं सप्तधा पाच्यं समं तैले पुनः पुनः ।
तद्वच्च सप्तधा पाच्यं सिद्धं कथकेन समं समम् ॥१२३॥
चतुःषष्टितमांशेन द्रुतं शुल्वं तु वेधयेत् ।
वेधयेत् कुंतवेधेन ढालयेद्दधिगोमये ।
पादांशं दापयेद् बीजं तारं भवति शोभनम् ॥१२४॥

तारजोडः ५

टंकणं शुद्धतालस्य दशांशेन दापयेत् ।
मेषीक्षीरैस्तथाज्यैश्च खल्वे मर्द्य दिनत्रयम् ॥१२५॥
दिनमेरंडतैलेन मर्द्य कूप्यां निवेशयेत् ।
पूर्ववत्पाचयेद्यंत्रे द्रवे शुष्के निवेशयेत् ॥१२६॥
ग्राह्यं षोडशयामांते सत्वं मृदुतरं महत् ।
षोडशांशेन तेनैव शुल्वकं तेन वेधयेत् ॥१२७॥
तारार्धं च द्रुतं द्राव्यं शुद्धं भवति पूर्ववत् ॥१२८॥

तारजोडः जोटो ६

षण् निष्कं ताम्रमावर्त्य आखुपाषाणनिष्ककम् ।

प्रदेयं कुंतवेधेन ह्यर्धबीजं भवेद्दलम् । ॥१२९॥
तालकं टंकणं सर्जिखारं चैवापामार्गजम् ।
वज्रिदुग्धैः समं मर्द्यं खल्वे यामचतुष्टयम् ॥१३०॥
अनेन चार्धभागेन ताम्रपत्राणि लेपयेत् ।
अंधमूषागतं ध्मातं एवं वारत्रये कृते ॥
तारार्धेन समावर्त्य शुद्धतारं भवेत्तु तत् ॥१३१॥

ताम्रस्य तारं

गुंजाकार्पासशिग्रूणां तैलमेकस्य चाहरेत् ।
तस्मिंस्तैले द्रुतं ताम्रं ढालयेच्च त्रिसप्तधा ॥१३२॥
षडंशं दापयेद् बीजं शुद्धतारं भवेत्तु तत् ।
शिग्रुमूलप्रलिप्तायां मूषायां द्रावयेत्ततः ॥१३३॥

धातुमृदूकरणम् १

अर्कापामार्गकदली भस्मतोयेन लोलयेत् ।
तद्वस्त्रगालितं ग्राह्यं स्वच्छं तोयं तदातपे ॥१३४॥
शोषितं लवणं तस्मात्समादाय प्रयत्नतः ।
रौप्ये वा यदि वा स्वर्णे द्राविते शतमांशतः ॥१३५॥
तदेव दापयेद्वाप्यं ढालयेत्तिलतैलके ।
इत्येवं तु त्रिधा कुर्यादत्यंतं मृदुतां व्रजेत् ॥१३६॥

धातुमृदूकरणम् २

अश्वगोमहिषीणां च खुरं शृंगं समाहरेत् ।
तच्चूर्णवापमात्रेण अत्यंतं मृदुतां व्रजेत् ॥१३७॥

धातुमृदूकरणम् ३

गजदंतस्य चूर्णं वा शुष्कं वाथ नृणां मलम् ।
कठिने दापयेद्वापं भवेन्मृदुतरं महत् ॥१३८॥

दलस्य निर्मलीकरणम्

नानाविधानि कार्याणि भूषणानि दलेन वै ।
श्वेतं रक्तं च वर्षाभूमूलं पिष्ट्वारनालकैः ॥१३९॥
पिष्ट्वाथ लवणं किंचित् क्षिप्त्वा तत्रैव पेषयेत् ।
तत्किंचिद्दलजातं तु घटिकार्धात्समुद्धरेत् ॥१४०॥
घर्षयन्लवणाम्लाभ्यां धाम्यमग्नौ पुनः पचेत् ।

इत्येवं तु त्रिधा कुर्यात् दलं भवति निर्मलम् ॥१४१॥

दलस्य निर्मलीकरणम्

फट्करीचूर्णमादाय खर्परे ह्यधरोत्तरम् ।
दत्वा दलस्य संरुध्य सम्यग्गजपुटे पचेत् ॥१४२॥
आदाय रज्जुकां बध्वा दोलायंत्रे दिनं पचेत् ।
चिंचारनालभाण्डे तु शुभ्रं भवति शंखवत् ॥१४३॥
अभिनवसुखसाध्यैः साधने युक्तिगर्भैर्गदितमिह सुसिद्धं स्तंभनं शुद्धवंगे ।
सुगममपि च तारं सूतशुल्बारयोगैः दलमतिमलहीनं वार्तिकानां हितार्थं ॥१४४॥

इतिश्री पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके बंगस्तंभनादिदलकरणं नाम अष्टमोपदेशः ॥ ८ ॥

———:०:———

# ॥ अथ श्री वादिखंडे नवमोपदेशः ॥

वज्रेण हेममिलितेन तु रंजितेन सूतेन हेममिलितेन सु रंजितेन ।
योगैः सुसुंदरतरैः कनकाद्रिकूटं कृत्वाथ शक्रपदहेतुमखांश्च कुर्यात् ॥१॥

वज्रद्वंद्वमेलापनम् १

अयस्कांतमुखं गुंजां तयोर्द्विगुणगंधकम् ।
स्त्रीस्तन्यैः पेषितं लेप्यं मूषायां द्वंद्वमेलकम् ॥२॥

वज्रद्वंद्वमेलापनम् २

गंध शशदंताश्च भ्रामकस्य मुखं तथा ।
अम्लवेतः शिलाधातुः सर्वं तुल्यं प्रपेषयेत् ॥३॥
मूषालेपेन तेनैव वज्रद्वंद्वं मिलत्यलम् ॥४॥

वज्रद्वंद्वमेलापनम् ३

महिषीकर्णनेत्रोत्थमलं चूर्णं च टंकणम् ।
स्त्रीस्तन्यं कर्कटास्थीनि शिलाजतुसमं समम् ॥
पिष्ट्वा मूषां प्रलेपेन वज्रद्वंद्वेषु मेलकम् ॥५॥

वज्रद्वंद्वमेलापनम् ४

भ्रमरास्थिनृकेशांश्च टंकणं कांतजं मुखम् ।
बालवत्सपुरीषं च स्त्रीस्तन्येन तु पेषयेत् ॥

तत्कल्कलिप्तमूषायां वज्रद्वंद्वं मिलत्यलम् ॥६॥

वज्रसूतमेलापनम्

भूनागं कांतपाषाणं माक्षिकं टंकणं मधु ।
स्नुक्पयःकर्कटास्थीनि काचमर्कपयः समम् ॥७॥
स्त्रीस्तन्यैः पेषितं सर्वं मूषालेपं तु कारयेत् ।
तन्मध्यस्थं वज्रसूतं हठाद्ध्माते मिलत्यलम् ॥८॥

स्वर्ण वज्रमेलापनम्—द्वंद्वखोटः १

मृतवज्रस्य चत्वारो भागा द्वादशहाटकम् ।
नागस्य च त्रयो भागा षट् शुद्धस्य च पारदात् ॥९॥
एकीकृत्य तु तन्मर्द्यं दिनमम्लेन केनचित् ।
तप्तखल्वे तु तत्कल्कं समुद्धृत्य निरोधयेत् ॥१०॥
मूषायां द्वन्द्वलिप्तायां हठाद्ध्माते मिलत्यलम् ॥११॥

स्वर्णवज्रमेलापनं २

क्षारैरुत्पलसारिण्या मृतं वज्रं विभावयेत् ।
दिनैकं शोधितं पिष्टं एकैकां कारयेद्वटीम् ॥१२॥
त्रिभागं पारदं चैव भागाश्चत्वारि हाटकम् ।
अम्लेन कारयेत्पिष्टीं तद्गर्भे तां क्षिपेद्वटीम् ॥१३॥
भूर्जपत्रेण तद्बध्वा धान्यराशौ विनिक्षिपेत् ।
पक्षमात्रात्समुद्धृत्य पूर्वंमूषागतं धमेत् ॥१४॥
मिलत्येव न संदेहो धाम्यमानं पुनः पुनः ॥१५॥

स्वर्णवज्रमेलापनम्—द्वंद्वखोटः ३

मृतवज्रस्य भागैकं स्वर्णपत्रेण वेष्टयेत् ।
सम्यक् षोडशभागेन मूषायां पूर्ववत्क्षिपेत् ॥१६॥
स्वर्णतुल्यं सितं काचं अथवा नृकपालकम् ।
चूर्णयित्वा क्षिपेत्तस्यां रुध्वा तीव्राग्निना धमेत् ॥१७॥
समुद्धृत्य पुनर्देयं काचं वा नृकपालकम् ।
लिप्त्वा मूषां धमेत्तदेवं मूषासु सप्तसु ॥१८॥
हेम्ना मिलति तद्वज्रं इत्येवं मेलयेत्पुनः ।
यावन्मिलति पादांशं सुवर्णे मृतवज्रकम् ॥१९॥

॥ इति वज्रहाटकयोर्द्वंद्वखोटः ॥

ताम्रवेधः ( सहस्रवेधी )

द्विभागं द्वंद्वखोटस्य त्रिभागं द्रुतसूतकम् ।
मर्दयेदम्लयोगेन दिनांते तं च गोलकम् ॥२०॥
मेषशृंग्यास्तु पंचांगं स्त्रीस्तन्येन तु पेषयेत् ।
अनेन वेधयेद् गोलं तद्बहिर्निगलेन च ॥२१॥
स्वेदादिमेलनांतं च कारयेद्धर्मपिष्टिवत् ।
मेषशृंगीभवैः (क्षी) क्षारैस्तत्खोटं मर्दयेत्क्षणम् ॥२२॥
मूषांतर्लेपयेत्तेन तत्तुल्यं हाटकं क्षिपेत् ॥
यावज्जीर्णं धमेत्तावत्पुनः स्वर्णं च दापयेत् ॥२३॥
जारयेद्धमनेनैव दत्वा विडवटीं क्रमात् ।
एवं विंशगुणं यावत्तावत्स्वर्णं च जारयेत् ॥२४॥
स्वर्णेन तु समावर्त्य सारणात्रययोगतः ।
तेनैव वेधयेच्छुल्वं सहस्रांशेन कांचनम् ॥
जायते दिव्यरूपाढ्यं जांबूनदसमप्रभम् ॥२५॥

लक्षवेधी वज्रकल्कः—

अथ अस्यैव खोटस्य सितस्वर्णे रंजनमाह

वज्रमूषागतं ध्मातं द्वंद्वखोटं हठाग्निना ।
माक्षिकाद्धौतसत्वं वा सत्वं वा माक्षिकोद्भवम् ॥२६॥
स्तोकं स्तोकं क्षिपेत्तस्मिन्ध्माते जीर्णं पुनः पुनः ।
यावत्तत्कुंकुमाभं स्यात्तावद्वज्रं समुद्धरेत् ॥२७॥
लक्षांशेन तु तेनैव सितहेमं तु वेधयेत् ।
जायते कनकं दिव्यं देवाभरणमुत्तमम् ॥२८॥

लक्षवेधी कल्कः—सीतस्वर्णे

वैक्रांतं माक्षिकं तुत्थं रसकांजनगैरिकम् ।
विमला चैव वैडूर्यं एतेष्वेकं पलार्धकम् ॥२९॥
नागवंगार्ककेष्वेकं यथालाभं पलार्धकम् ।
द्वंद्वचूर्णं ततो रुध्वा वज्रमूषागतं धमेत् ॥३०॥
पूर्ववद् गंधकाम्लेन मर्द्य रुध्वा पुटे पचेत् ।
चतुर्दशपुटैरेवं बालार्कसदृशं भवेत् ॥३१॥

अनेन वज्रखोटं तु यथापूर्वं तु रंजयेत् ।
तद्द्रव्यं सितं हेम लक्षांशात्कांचनं भवेत् ॥३२॥

लक्षवेधी कल्कः ताम्रे

अथवा द्वंद्वखोटं तु सूक्ष्मचूर्णं तु कारयेत् ।
एतत्खोटं शुद्धचूर्णं अंधमूषागतं धमेत् ॥३३॥
आरोटरसतस्तुल्यं जम्बीरैर्मर्दयेत् दिनम् ।
वस्त्रे बध्वा दिनं स्वेद्यं दोलायंत्रे सकांजिके ॥३४॥
सवस्त्रं पाचयेत्पश्चाद् गंधतैले दिनावधि ।
ततो वस्त्रात्समुद्धृत्य निगडेन तुले पचेत् ॥३५॥
स्वेदादि धमनान्तं च कारयेद्धेमपिष्टिवत् ।
तत्खोटं तु समुद्धृत्य रंजयेत्तन् निगद्यते ॥३६॥
तीक्ष्णं शुल्वं समं चूर्ण्य अंधमूषागतं धमेत् ।
तत्खोटं पलमेकं तु सिद्धचूर्णेन संयुतम् ॥३७॥
चूर्णं रुध्वा धमेद्गाढं तत्खोटं मर्दयेत्पुनः ।
पूर्ववद्गंधकाम्लेन पुटान्दद्याच्चतुर्दश ॥३८॥
अनेन पूर्वखोटं तु मुषामध्ये च पूर्ववत् ।
यावत्कुंकुमवर्णं स्यात्तावद्वारं शनैः शनैः ॥३९॥
स्वर्णेन च समावर्त्य सारणात्रयसारितम् ।
अनेन लक्षभागेन द्रुतं शुल्वं तु वेधयेत् ॥४०॥
जायते कनकं दिव्यं सत्यं शंकरभाषितं ॥४१॥

कोटिवेधि कल्कः—तारे ताम्रे

कर्षैकं द्रुतसूतस्य ह्यष्टगुंजं तु हाटकम् ।
चतुर्गुंजं मृतं वज्रं हंसपाद्या द्रवैर्दिनम् ॥४२॥
मर्दयेत्तप्तखल्वे तु वज्रमूषाश्रितं पचेत् ।
भूधराख्यपुटैकेन समुद्धृत्याथ मर्दयेत् ॥४३॥
हंसपाद्या द्रवैरेवं तप्तखल्वे दिनावधि ।
पूर्ववद्भूधरे पच्यादेवं शतपुटैः पचेत् ॥४४॥
रक्तवर्णं भवेद् भस्म सर्वयोगेषु योजयेत् ॥४५॥

तत्रपारदे अभ्रजारणम्

द्रवैर्वर्तुलपत्रायाः सोमवल्या द्रवैश्च वा ।
धान्याभ्रं सप्तधा भाव्यं ततो जारणमारभेत् ॥४६॥
गोस्तनाकारमूषायां सूतं शुद्धं विनिक्षिपेत् ।
पूर्वाभ्रं षोडशांशं च मूषायां चणकद्रवैः ॥४७॥
वालुकाभाण्डमध्ये तु चूल्यां मृद्वग्निना पचेत् ।
अभ्रके चणकद्रावं जीर्णे जीर्णे क्षिपेत्पुनः ॥४८॥
इत्येवं जारयेत्तुल्यं पारदे गगनं क्रमात् ।

अभ्रपिष्टी

सोमवल्लीरसैर्यामं मर्द्यं धान्याभ्रकं ततः ॥४९॥
रुध्वा वनोत्पलैर्दद्यात्क्रमादेवं पुटत्रयम् ।
सप्तधा भावयेद् धर्मे सोमवल्या द्रवैर्दिनम् ॥५०॥
श्वेताया शरपुंखाया मूलैर्गोक्षीरपर्पितैः ।
कल्कितैर्मृण्मयं पात्रं लिप्त्वा तत्राभ्रकं क्षिपेत् ॥५१॥
तन्मध्ये निक्षिपेत्सूतं तत्पृष्ठे चाभ्रकं पुनः ।
सोमवल्लीद्रवैः पूर्वं तत्पात्रं चातपे खरे ॥५२॥
धारयेच्चरते दीर्घं जायते व्योमपिष्टिका ।

कोटिवेधि कल्कः—ताम्रे

पूर्वोक्ता गंधपिष्टी या स्तंभिता जारणं विना ॥५३॥
तथा ह्यभ्रकपिष्टी च अभ्रसत्वं तृतीयकम् ।
चतुर्थं रक्तभस्मापि पूर्वं वज्रेण यत्कृतम् ॥५४॥
चत्वारः प्रतिकर्षांशं जारितं पारदं पलम् ।
सर्वमेतत्तप्तखल्वे हंसपाद्या द्रवैर्दिनम् ॥५५॥
मर्दितं तत्समुद्धृत्य पचेत्कच्छपयंत्रके ।
यावत्सूतावशेषं तु तावज्जार्यं पुटेन वै ॥५६॥
अस्य सूतस्य तुल्यांशं वज्रद्वंद्वं नियोजयेत् ।
दोलास्वेदेन पक्तव्यं यावद् भवति गोलकम् ॥५७॥
जारयेत्कच्छपे यंत्रे यावत्सूतावशेषितम् ।
इत्येवं षड्गुणं जार्यं वज्रद्वंद्वं प्रयत्नतः ॥५८॥
तेनैव वज्रद्वंद्वेन सारयेत्सारणात्रयम् ।

अनेन कोटिभागेन द्रुतं शुल्बं तु वेधयेत् ॥
जायते कनकं दिव्यं देवाभरणभूषणम् ॥५९॥

चंद्रार्कवेधः

भागैकं मृतवज्रस्य सुद्धसूतस्य षोडश ।
मर्दयेदम्लवर्गेण तप्तखल्वे दिनावधि ॥६०॥
पक्वबीजस्य पत्राणि तुल्यान्येतेन लेपयेत् ।
सुपक्वभानुपत्रैस्तु लिप्तपत्राणि वेष्टयेत ॥६१॥
शरावसंपुटे रुध्वा निखनेच्चूलिमध्यतः ।
त्रिदिनं ज्वालयेत्तत्र वह्निमल्पाल्पशः क्रमात् ॥६२॥
ततो निगडलिप्तायां मूषायां तेन रोधयेत् ।
कारीषवह्निना पच्यात् अहोरात्रात्समुद्धरेत् ॥६३॥
मधुना मर्दयेत्किंचित् ततस्तेन शतांशतः ।
लिप्त्वा चंद्रार्कपत्राणि हंधमूषागतं धमेत् ।
स्वर्णं भवति रूपाढ्यं सत्यं शंकरभाषितम् ॥६४॥

सहस्रवेधीकल्कः—ताम्रे

मृतवज्रस्य भागैकं भागैकं हाटकस्य च ।
त्रिभागं द्रुतसूतस्य सर्वं स्तन्येन मर्दयेत् ॥६५॥
तद्गोलं बंधयेद्वस्त्रे गंधतैले त्र्यहं पचेत् ।
ततस्तुल्येन स्वर्णेन समावर्तं तु कारयेत् ॥६६॥
दत्वा विडवटीं चैव एकविंशतिवारकम् ।
एकविंशगुणे जीर्णे सारयेत्सारणात्रयम् ॥६७॥
सहस्रांशेन तेनैव शुल्बे वेधं प्रदापयेत् ।
जायते कनकं दिव्यं देवाभरणभूषणम् ॥६८॥

शतवेधी कल्कः—

शुद्धसूतं मृतं वज्रं हंसपाद्या द्रवैः समम् ।
मर्दयेत्तप्तखल्वे तु त्रिदिनांते समुद्धरेत् ॥६९॥
बीजैर्दिव्यौषधानां च पिष्ट्वा मूषां प्रलेपयेत् ।
तत्र पूर्वरसं क्षिप्त्वा रुध्वा तत्करिषाग्निना ॥७०॥
समुद्धृत्य पुनस्तस्मिन् शुद्धसूतं समं क्षिपेत् ।
हंसपाद्या द्रवैर्मर्द्य पूर्ववद् दिवसत्रयम् ॥७१॥

तद्गोलं पूर्वमूषायां रुध्वा गजपुटे पचेत् ।
जायते भस्म सूतोयं सर्वकर्मसु योजयेत् ॥७२॥
अस्य तुल्यं शुद्धसूतं सूतपादं च टंकणम् ।
सर्वमम्लैर्दिनं मर्द्य कृत्वा गोलं समुद्धरेत् ॥७३॥
रक्तकार्पासयोर्बीजं राजिका यवचिंचिका ।
वंध्याकर्कोटकी चैव पिष्ट्वा गोलं प्रलेपयेत् ॥७४॥
ऊर्ध्वाधो लवणं दत्वा रुध्वा मूषां विशोपयेत् ।
कारीषाग्नौ दिवारात्रौ पाचयित्वा समुद्धरेत् ॥७५॥
पूर्वकल्केन तद्गोलं क्षिप्त्वा रुध्वाथ पूर्ववत् ।
पुटे पच्याद्दिवारात्रौ एवं कुर्याच्च सप्तधा ॥७६॥
ततस्तेनैव कल्केन लिप्त्वा रुध्वाथ शोषयेत् ।
सम्यग्गजपुटे पच्यात्ततो मूपागतं धमेत् ॥७७॥
शतमांशेन तेनैव चंद्रार्कौ वेधयेद् द्रुतम् ।
जायते कनकं दिव्यं देवाभरणभूषणम् ॥७८॥

शतवेधी कल्कः ताम्रे

अथवा भस्मसूतं तत्कार्यं टंकणसंयुतम् ।
अंधमूषागतं ध्मातं खोटं भवति शोभनम् ॥७९॥
खोटतुल्यं शुद्धहेम सर्वमेकत्र द्रावयेत् ।
चंद्रार्के वेधयेत्तेन पूर्ववत्कांचनं भवेत् ॥८०॥

शतवेधि कल्कः—तारे ताम्रे

वज्रभस्म स्नुहीक्षीरैर्दिनमेकं विमर्दयेत् ।
रुध्वा गजपुटे पच्यात् एवं शतपुटैः पचेत् ॥८१॥
तत्तुल्यं पारदं शुद्धं क्षिप्त्वा मर्द्यं दिनत्रयम् ।
देवदाल्या द्रवैरेवं तद्गोलं चांधितं पुटेत् ॥८२॥
कारीषाग्नौ दिवारात्रौ समुद्धृत्याथ मर्दयेत् ।
देवदाल्या द्रवैस्त्र्याहं तद्वद्रुध्वा पुटे पचेत् ॥८३॥
एवं दशपुटैः पाच्यं वज्रतुल्यं च हाटकम् ।
क्षिप्त्वा कांचनकद्रावैर्मर्दयेद्दिवसत्रयम् ॥८४॥
पूर्ववत्पुटपाकेन एवं दशपुटैः पचेत् ।

स्वर्णतुल्यं ततस्तीक्ष्णं चूर्णं कृत्वा नियोजयेत् ॥८५॥
मर्दयेत्त्रिफलाद्रावैस्तत्सर्वं दिवसत्रयम् ।
पुटयेत्पूर्वयोगेन एवं दशपुटैः पचेत् ॥८६॥
तीक्ष्णतुल्यं मृतं नागं दत्वा सर्वं विमर्दयेत् ।
वासारक्ताश्वमारोत्थद्रावैः खल्वे दिनत्रयम् ॥८७॥
रुध्वा गजपुटे पच्यात् पुनर्मर्द्य च पाचयेत् ।
एवं दशपुटैः पक्वं समुद्धृत्याथ मर्दयेत् ॥८८॥
अम्लवर्गेण तत्सर्वं मर्द्यं यामचतुष्टयम् ।
रुध्वा गजपुटे पच्यात् पुनर्मर्द्य च पाचयेत् ॥८९॥
एवं दशपुटैः पाच्यं सिंदूरसदृशं भवेत् ।
अनेन शतमांशेन चंद्रार्कं वेधयेद् द्रुतम् ॥९०॥
अथवा मधुनाक्तेन चंद्रार्कौ लेपयेत्ततः ।
जायते कनकं दिव्यं पुटे दत्ते न हीयते ॥९१॥
अथवा तारपत्राणि मधुनाक्तेन लेपयेत् ।
चतुःषष्ठितमांशेन दिव्यं भवति कांचनम् ॥९२॥

शतवेधि कल्कः—तारे ताम्रे

चतुःषष्टिगुणं सूतं भागैकं मृतवज्रकम् ।
मर्दयेदम्लवर्गेण तप्तखल्वे दिनत्रयम् ॥९३॥
भागत्रयं हेमपत्रं अनेनैव प्रलेपयेत् ।
रुध्वाथ भूधरे पच्यात्समुद्धृत्याथ मर्दयेत् ॥९४॥
शुद्धेन सूतराजेन त्रिगुणेन च संयुतम् ।
अम्लवर्गैस्त्र्यहं मर्द्यं रुध्वाथ भूधरे पुटेत् ॥९५॥
पुनर्मर्द्यं पुनः पाच्यं एकविंशतिवारकम् ।
अनेन शतमांशेन चंद्रार्कं मधुना सह ॥९६॥
लिप्त्वा रुध्वा धमेद् गाढं दिव्यं भवति कांञ्चनम् ॥९७॥

षोडशवेधी कल्कः—तारे

पूर्वोक्त भस्मसूतेन अम्लपिष्टेन लेपयेत् ।
चतुर्गुणं स्वर्णपत्रं रुध्वा गजपुटे पचेत् ॥
पादांशेन पुनस्तस्मिन् भस्मसूतं नियोजयेत् ॥९८॥

मर्दयेदम्लवर्गेण तद्वद्रुध्वा पुटे पचेत् ।
एवं चतुःपुटैः पक्वं म्रियते हाटकं शुभम् ॥९९॥
तेनैव षोडशांशेन द्रुतं तारं तु वेधयेत् ।
अथवा पत्रलेपेन दिव्यं भवति कांचनम् ॥१००॥

शतवेधी कल्कः--ताम्रे

मृतवज्रस्य भागैकं शुद्धसूतस्य षोडश ।
देवदाली शंखपुष्पी रसैर्मर्द्यं दिनत्रयम् ॥१०१॥
वज्रमूषागतं रुध्वा दिनैकं भूधरे पचेत् ।
समुद्धृत्याथ तद्द्रावैर्दिनं मर्द्यं निरुध्य च ॥१०२॥
दिनैकं भूधरे पच्यात् तद्वन्मर्द्यं च पाचयेत् ।
इत्येवं सप्तधा कुर्याज्जायते भस्म सूतकम् ॥१०३॥
तद्भस्म सूतकं तुल्यं वज्रमूषांधितं धमेत् ।
तत्खोटं जायते दिव्यं रंजयेत्तन्निगद्यते ॥१०४॥
तीक्ष्णं शुल्वं समं चूर्ण्यं अंधमूषागतं धमेत् ।
तत्खोटं सिद्धचूर्णं तु गंधकाम्लेन मर्दयेत् ॥१०५॥
पूर्ववत्क्रमयोगेन पुटान्दद्याच्चतुर्दशः ।
अनेन पूर्वखोटं तु द्रुतं वाप्यं पुनः पुनः ॥१०६॥
तद्भस्म गंधकं तुल्यं वज्रमूषांधितं धमेत् ।
दशवारेण तत्खोटं जायते कुंकुमप्रभम् ॥१०७॥
स्वर्णेन च त्रिधा सार्यं शतवेधी भवेच्च तत् ।
द्रुतशुल्वे प्रदातव्यं दिव्यं भवति कांचनम् ॥१०८॥

सहस्रवेधी कल्कः--तारारिष्टे

पूर्वोक्तं भस्मसूतं तु पलैकं समपन्नगम् ।
कांतपात्रगतं मर्द्यं दिनैकं लोहमुष्टिना ॥१०९॥
मृद्वग्निना तु तत्पात्रे मर्दयेत्पाचयेच्छनैः ।
यावन्मिश्रं समुद्धृत्य रुध्वा गजपुटे पचेत् ॥११०॥
मर्द्यं वासारसैः पच्यादेवं वारचतुर्दश ।
गोपित्तेन पुनर्मर्द्य देयं पुटचतुर्दश ॥१११॥
तत्तुल्यं स्वर्णचूर्णं च दत्वा पित्तेन मर्दयेत् ।

दिनांते तत्समुद्धृत्य क्रामणेन समायुतम् ॥११२॥
सहस्रांशेन तेनैव ताराऽरिष्टं तु वेधयेत् ।
जायते कनकं दिव्यं देवाभरणमुत्तमम् ॥११३॥

सहस्रवेधी कल्कः—ताम्रस्य तारं

नागस्थाने यदा बंगं पूर्ववत्क्रमयोगतः ।
तारचूर्णेन संयुक्तं शुल्बे वेधं प्रदापयेत् ॥
सहस्रांशेन तत्तारं भवेत्कुंदेन्दुसन्निभम् ॥११४॥

कोटिवेधी कल्कः—ताम्रे

द्रुतसूतेन वज्रेण वज्रैः शुद्धरसेन वा ।
मृतसूतेन वज्रेण वज्रैः शुद्धरसेन वा ॥११५॥
दिव्ययोगवरैः खोटं पूर्वं नानाविधं तु यत् ।
प्रोक्तं तत्खोटमेकं तु द्रावयेत्पिष्टिखोटवत् ॥११६॥
द्रुतं तु पारदं दिव्यं मृत्युदारिद्र्यनाशनम् ।
अथास्य द्रुतसूतस्य जारयेत्पक्वबीजकम् ॥११७॥
क्रमेण षड्गुणं यावत्कच्छपाख्ये बिडान्विते ।
वक्ष्यमाणप्रकारेण व्योमसत्वं यथाजरेत् ॥११८॥
जारितं तत्रिधा सार्यं पक्वबीजेन वै क्रमात् ।
अनेन कोटिमांशेन द्रुतशुल्बं तु वेधयेत् ॥११९॥
जायते कनकं दिव्यं देवाभरणभूषणम् ॥१२०॥

शब्दवेधी कल्कः

अथास्य कोटिवेधस्य रसेन्द्रस्यापरो विधिः ।
विष्णुक्रांता च चक्रांका कंठारी चैत्र चिंचिका ॥१२१॥
एतासां द्रवमादाय मूषालेपं तु कारयेत् ।
तस्यां पूर्वरसं क्षिप्त्वा धमेद् द्रावं क्षिपन् क्षिपन् ॥१२२॥
वज्रं तत्रैव दातव्यं द्रवत्येव न संशयः ।
ततस्तस्मात्समुद्धृत्य दोलायंत्रे त्र्यहं पचेत् ॥१२३॥
उद्धृत्य बिडलिप्तायां मूषायां प्रकटं धमेत् ।
ग्रसत्येव न संदेहो तीव्रध्मातानलेन च ॥१२४॥
वज्रं वा पद्मरागं वा जार्यं दशगुणे रसे ।

कारयेद्वज्रबीजेन शब्दवेधी भवेद्रसः ॥१२५॥
अथवा मारिते तस्मिन्जारणं सारयेत्पुनः ।
उच्चटा मीननयना सर्पाक्षी रक्तचित्रकम् ॥१२६॥
एतासां निक्षपेद् द्रावं द्रुते मूषागते रसे ।
इंद्रनीलं क्षीपेत्तत्र द्रवत्येव न संशयः ॥१२७॥
पूर्ववत्स्वेदनेनैव बिडयोगेन जारयेत् ।
इत्येवं त्रिगुणं जार्यं इंद्रनीलं क्रमेण तु ॥१२८॥
तद्रसं वक्त्रमध्ये तु यः करोति नरोत्तमः ।
स पूज्यो देवदेवानां खेचरत्वेन मोदते ॥१२९॥
तस्य मूत्रपुरीषाभ्यां सर्वलोहानि कांचनम् ।
जायते दिव्यरूपाढ्यं सत्यं शंकरभाषितम् ॥१३०॥

इत्येवं विष्टिखोटं परिरसमपरं संकरैः खोटबद्धं
जातं तद्द्रावितं वै मृतमथ विमलं स्वर्णराशिं करोति ॥
किंवा सा पक्वबीजं ग्रसति यदि द्रुतो जायते कोटिवेधी
वज्राभ्रं रत्नजातं चरति यदि रसः खेचरत्वं प्रदत्ते ॥१३१॥

इतिश्री पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके वज्रयोगेन हेमकरणं नाम नवमोपदेशः ॥ ९ ॥

—:०:—

## ॥ अथ श्री वादिखंडे दशमोपदेशः ॥

लोहैर्महारसवरैर्बिडपक्वबीजं कृत्वाथ पारदवरे विधिवच्च जार्यं ॥
योज्यं तथा सकलसारणकर्मयोगे तद्वक्ष्यते विविधबीजविद्याधिकारम् ॥१॥

पक्वबीजकरणम् १

स्वर्णं ताम्रं समं शुद्धं द्रावितं लेपयेत्पुनः ।
साम्लेन ताप्यकल्केन धमेत्स्वर्णविशेषितम् ॥२॥
एवं दशगुणं वाह्यं ताप्यं वा तुत्थसत्वकम् ।
पक्वबीजमिदं ख्यातं स्वर्णशेषं समाहरेत् ॥३॥

पक्वबीजकरणम् २

नागाभ्रं द्वंद्वितं तुल्यं स्वर्णे वाह्यं द्विषड्गुणम् ।
पूर्ववत्स्वर्णशेषं तु ग्राह्यं स्यात्पक्वबीजकम् ॥४॥

पक्वबीजकरणम् ३

स्वर्णं पीताभ्रसत्वं च तुल्यांशं द्वंद्वितं धमेत् ।
ताप्यं तालकवापेन स्वर्णशेषं समाहरेत् ॥
एवं दशगुणं सत्वं वाह्यं स्यात्पक्वबीजकम् ॥५॥

पक्वबीजकरणम् ४

रसकाभ्रकयोः सत्वं ताम्रं नागं क्रमोत्तरम् ॥६॥
चूर्णितं द्वंद्वलिप्तायां मूषायां चांधितं धमेत् ॥
तत्खोटं माक्षिकं तुत्थं अम्लैः पिष्ट्वा पुटे पचेत् ॥७॥
समुद्धृत्य पुनश्चाम्लैर्मर्द्यं रुध्वा पुटे पचेत् ।
एवं पंचपुटैः पक्वं द्रुते स्वर्णे तु वाहयेत् ॥
धमेद्दशगुणं यावत्तावत्स्यात्पक्वबीजकम् ॥८॥

नागबीजकरणम्

लोहस्य कुट्यमानस्य सुतप्तस्य दलानि वै ।
पतंति तानि स्वीकृत्य ख्यातोयं लोहपर्पटः ॥९॥
लोहपर्पटमाक्षीकं कंकुष्ठं विमलाभ्रकम् ।
मृतशुल्बं शिलासूतं दरदार्कस्नुहीपयः ॥१०॥
एतैः समं नागचूर्णं मर्द्यं रुध्वा पुटे पचेत् ।
पुनर्मर्द्यं पुनः पाच्यं यावद्वारांश्चतुर्दश ॥११॥
एवं शतगुणं वाह्यं शुद्धहेम्नि धमन् धमन् ।
तत्स्वर्णं नागबीजं स्याद्गोरोचननिभं भवेत् ॥१२॥

अथपक्वबीजानां रंजनमाह

पक्वबीज रंजनम्

खर्परस्थे द्रुते नागे ब्रह्मबीजदलानि हि ।
क्षिप्त्वाग्निं ज्वालयेच्चंडं ब्रह्मदंडेन चालयेत् ॥१३॥
चतुर्यामात्तु तद् भस्म जातं पात्रात्समुद्धरेत् ।
रुध्वा गजपुटे पच्यात् पांदांशं गंधकं पुनः ॥१४॥
दत्वाम्लमर्दितं पच्यादेवं वारांश्चतुर्दश ।
रक्तवर्णं भवेद्भस्म तद् भागं खर्परे क्षिपेत् ॥१५॥
भागत्रयं शिलाचूर्णं पृथक्पात्रे विनिक्षिपेत् ।
पंचांगं वासकाचूर्णं त्वक्चूर्णं चार्जुनस्य वै ॥१६॥

शाककिंशुककोरंटशिग्रूणां पुष्पमाहरेत् ।
नागिनी नागकन्या च कुमारी चाहिमारकम् ॥१७॥
सर्वेषां प्रतिभागैकं शिलामध्ये विनिक्षिपेत् ।
सर्वं चतुर्गुणैर्मूत्रैश्छागजैः क्काथमाचरेत् ॥१८॥
पूर्वोक्तनागभूतेश्च खर्परस्थस्यसंक्षिपेत् ॥
चालयेत्पाचयेच्चूल्यां यावत्सप्तदिनावधि ॥१९॥
यत्नेन मृतनागेन वापो देयो द्रुतस्य च ॥
पक्ववीजस्य वारांस्त्रीन् रंजितं जायते शुभम् ॥२०॥

तन्नागभस्मोपयोगः

दलानां चैव बीजानां पिष्टीस्तंभे विशेषतः ॥
उच्चाटे क्रामणे योज्यं पूर्वोक्तं मृतनागकम् ॥२१॥

पक्कबीजरंजनकं तैलम्

मंजिष्ठा ब्रह्मपुष्पं च पुष्पं च करवीरकम् ॥२२॥
सर्वासां वृक्षजातिनां रक्तपुष्पाणि चाहरेत् ॥
खादिरं देवदारुं च द्विनिशा रक्तचंदनम् ॥२३॥
सर्वं लाक्षारसैः पिष्ट्वा क्षिप्त्वा तैलं चतुर्गुणम् ॥
पचेत्तैलावशेषं तु तस्मिस्तैले निषेचयेत् ॥
त्रिसप्तधा पक्ववीजं रंजते जायते शुभम् ॥२४॥

तारबीज करणम् १

गर्भद्रावैः प्रयोक्तव्यं तथा सर्वत्र सारणे ॥
समेन जारयेत्सूतं द्विगुणेन तु सारयेत् ॥२५॥
त्रिगुणेन ह्यनेनैव कर्तव्यं प्रतिसारणम् ॥
सारितं क्रामणेनैव वेधकाले नियोजयेत् ॥२६॥
विमला तीक्ष्णचूर्णं च सत्वं श्वेताभ्रकस्य च
रसकं तारमाक्षीकं समभागं विचूर्णयेत् ॥२७॥
चूर्णाच्चतुर्गुणं बंगे द्वंद्वमेलापकं धमेत् ॥
मर्दयेदम्लयोगेन रुध्वा गजपुटे पचेत् ॥२८॥
एवं पंचपुटैः पक्वं ततस्तारे तु वाहयेत् ॥
धमन्दशगुणं यावत्तत्तारं तारबीजकम् ॥२९॥

तारबीजम् २

ताप्येन मारयेद् बंगं यथा तालेन मारितम् ॥
तद् द्वात्रिंशगुणं तारे वाहयेत्तालवापतः ॥
ताम्रबीजं तु तच्छ्रेष्ठं सारणे रंजने हितं ॥३०॥

तारबीजम् ३

कुटिलं विमला तीक्ष्णं समं चूर्णं प्रकल्पयेत् ॥
ध्मातव्यं द्वंद्वलिप्तायां खोटमम्लेन पेषितम् ॥३१॥
पुटितं पंचवारं तु तारे बाह्यं शनैर्धमेत् ॥
यावद्दशगुणं तत्तु तारबीजं भवेच्छुभम् ॥ ॥३२॥

तारबीजम् ४

बंगं श्वेताभ्रसत्वं च तारमाक्षिकसत्वकम् ॥
द्वंद्वमूषागतं धाम्यं त्रितयं चूर्णितं समम् ॥३३॥
बाह्यं दशगुणं तारे तारमाक्षिकवापतः ॥
तत्तारं जायते बीजं सर्वकार्यकरक्षमम् ॥३४॥

तारबीजरंजनम्

यथाप्राप्तैः श्वेतपुष्पैर्नानावृक्षसमुद्भवैः ॥३५॥
रसं चतुर्गुणं योज्यं कंगुणीतैलवापतः ॥
पचेत्तैलावशेषं तु तस्मिंस्तैले निषेचयेत् ॥३६॥
द्रावितं तारबीजं तु एकविंशतिवारकम् ॥
रंजितं जायते तत्तु रसराजस्य रंजकम् ॥३७॥

सारणा तैलम्

ज्योतिष्मती करंजाक्ष कटुतुंबीसमुद्भवम् ॥
तैलमेकं समादाय मण्डूकवसया समम् ॥३८॥
कूर्मसूकर मेषाहिजलूकामत्स्यजापि वा ॥
एतेष्वेका वसा ग्राह्या पूर्वतैलं समाहरेत् ॥३९॥
रक्तवर्गं पीतवर्गं कार्यं क्षीरैश्चतुर्गुणैः ॥
पुष्पाणां रक्तपीतानां एकैकानां द्रवं हरेत् ॥४०॥
एतद्द्वंद्वविभागं स्यात्पूर्वक्वाथचतुष्टयम् ॥
पाटलीकाकतुंड्युत्थं महाराष्ट्रीद्रवं तथा ॥४१॥

प्रत्येकं भागमेकैकं पूर्वतैलद्रसायुतम् ॥
योज्यं भागद्वयं तत्र भूलतामलताप्यकम् ॥४२॥
द्वंद्वमेलापयोरेकं तैलात् षोडशकांशकम् ॥
प्रत्येकं योजयेत्तस्मिन् सर्वमेकत्र पाचयेत् ॥४३॥
ग्राह्यं तैलावशेषं तु वस्त्रपूतं सुरक्षयेत् ॥
विख्यातं सारणातैलं रसराजस्य कर्मणि ॥४४॥

क्रामण सत्वम् १

नागं बंगं मृतं तुल्यमम्लेन च वटीकृतम् ।
क्रामणार्थं प्रयोक्तव्यं वेधकाले रसस्य तु ॥४५॥

क्रामण सत्वम् २

सौराष्ट्रीं भावयेद् धर्मे गवां पित्तैः त्रिधाततः ॥
तत्सत्वं सोमवद् ग्राह्यं क्रामकं योजयेद्रसे ॥४६॥

क्रामण सत्वम् ३

मनःशिला विषं ताप्यं महिषीकर्णजं मलम् ॥
काकविट् खररक्तं च क्रामणं स्नुकूपयोन्वितम् ॥४७॥

क्रामण सत्वम् ४

नररक्तार्कदुग्धं च टंकणं भूलता शिला ॥
समांशं क्रामकं योज्यं वेधकाले रसस्य तु ॥४८॥

क्रामण सत्वम् ५

इन्द्रगोपं विषं कांतं नररक्तं स्नुहीपयः ॥
रसकं दरदं तैलं सर्वमेकत्र मर्दयेत् ॥
क्रामकं क्षेपलेपाभ्यां वेधकाले नियोजयेत् ॥४९॥

क्रामण सत्वम् ६

रसं धान्याभ्रकं सत्वं काकविट् हरितालकम् ॥
नयनं सहदेवानां भूनागश्च समं समम् ॥५०॥
पिण्डितं क्रामणे सिद्धं क्षेपे लेपे नियोजयेत् ॥५१॥

क्रामण सत्वम् ७

कदलीकंद सौवीरं कंटकारीरसप्लुतम् ॥
क्रामणं सर्वधातूनां सर्वद्वंद्वेषु मेलनम् ॥५२॥

क्रामणं विना रससिद्धेर्निष्फलता

क्रामणेन विना सूतो न क्रमेद्देहलोहयोः ॥
उक्तस्थानेषु योगेषु तस्मात्सर्वेषु योजयेत् ॥५३॥

॥ इति क्रामणम् ॥

॥ अथ वज्रादिजारणे मूषालेपार्थं बिडयोगाः ॥

महाबिडः १—रसे रत्नादिजारणे

दग्धं शंखं रविक्षीरैर्भावितं शतधातपे ॥
ततः पंचपुटैः पक्वं रुध्वा रुध्वाथ संपुटे ॥५४॥
तत्समं टंकणं क्षिप्त्वा ह्यम्लवर्गेण भावयेत् ॥
राजावर्तं प्रवालं च दरदं गंधकं शिला ॥५५॥
पंचानां तु समं चूर्णं शंखतुल्यं नियोजयेत् ॥
सर्वं तदम्लवर्गेण मर्दयेद्दिवसत्रयम् ॥५६॥
अयं महाबिडः ख्यातो खोटानां जारणे हितः ॥
मूषालेपं तु सर्वत्र जारणे योजयेत्सदा ॥५७॥
तत्क्षणाज्जरते सूतो वज्रादीनि न संशयः ॥५८॥

बिडः २—रसबुभुक्षितकरणे

त्रिक्षारं पंचलवणं नवसारं कटुत्रयम् ॥
इंद्रगोपं घनं शिग्रु सूरणं वनसूरणम् ॥५९॥
भावयेदम्लवर्गेण त्रिदिनं ह्यातपे खरे ॥
अनेन मर्दितः सूतो भक्षयेदष्टलोहकम् ॥६०॥

बिडः ३—सर्वजारणे

व्योषं गंधक कासीसं स्वर्णपुष्पी सुवर्चलम् ॥
सज्जी टंकण सौवीरं सैंधवं शिग्रुजैर्द्रवैः ॥
दशाहं भावयेद् घर्मे बिडोयं जारणे हितः ॥६१॥

बिडः ४—

दग्धशंखं रविक्षीरैर्भावितं शतधातपे ॥
ततः पंचपुटैः पक्वं जारणे बिडमुत्तमम् ॥६२॥

बिडः ५—अभ्रसत्वजारणे

त्रिक्षारं पंचलवणं अम्लवेतससंयुतम् ॥
अनेन मर्दयेत्सूतमभ्रसत्वं चरत्यलम् ॥६३॥

बिडः ६—सर्वलोहजारणे

गोमूत्रं गंधकं घर्मे शतवारं विभावयेत् ॥

शिग्रुमूलद्रवैस्तद्वद् दग्धं शंखं विभावयेत् ॥ ॥६४॥
एतद्गंधकशंखाभ्यां समांशं विषसैंधवम् ॥
एतैर्विमर्दितं सूतं ग्रसते सर्वलोहकम् ॥६५॥

वह्निमुखो बिडः ७—सर्वजारणे

टंकणं शतधा भाव्यं द्रवैः पालाशवृक्षजैः ॥
बिडो वह्निमुखो नाम हितः सर्वस्य जारणे ॥६६॥

बिडः ८

गंधकं नवसारं वा मुखं कांतस्य चातपे ॥
शतधा मूत्रवर्गेण भावितं स्याद् बिडं पृथक् ॥६७॥

ज्वालामुखो बिडः ९

त्रिक्षारं गंधकं तालं भूखगं नवसारकम् ॥
सैंधवं च समं सर्वं मूत्रवर्गैर्दिनं पचेत् ॥६८॥
ज्वालामुखो बिडो नाम हितः सर्वत्र जारणे ॥६९॥

बिडः १०

गंधकं शतधा भाव्यं वनशिग्रुशिफाद्रवैः ॥
जंबीरैर्नवसारं वा भावितं स्याद्बिडं पृथक् ॥७०॥

वडवानल बिडः ११

वासकैरंडकदली देवदाली पुनर्नवा ॥
वासापालाश निचुलं तिलं कांचन मोक्षकम् ॥७१॥
एतान्समूलानादाय नातिशुष्कान्विखण्डयेत् ॥
पंचांगं मूलकं दग्ध्वा तिलकाण्डं च तत्समम् ॥७२॥
एतत्क्षारैः पूर्वकल्कं मूत्रवर्गेण भावयेत् ॥
वस्त्रपूतं द्रवं पच्यात् मृद्वग्नौ लोहपात्रके ॥७३॥
बाष्पाणां बुद्बुदानां च बहूनां उद्गमो यदा ॥
तदा कासीस सौराष्ट्री क्षारत्रयं कटुत्रयम् ॥७४॥
गंधकं पंचलवणं नवसारं च हिंगुलम् ॥
एतेषां निक्षिपेच्चूर्णं तस्मिन्पात्रेथ चालयेत् ॥७५॥
गुडपाकं समुत्तार्य लोहसंपुटके क्षिपेत् ॥
सप्ताहं भूमिगर्भेथ धान्यराशौ तथा पुनः ॥
सप्ताहं संस्थितः सिद्धो बिडोयं वडवानलः ॥७६॥

बिडः १२—सत्वजारणे

भावयेन्निचुलक्षारं देवदालीदलद्रवैः ॥
एकविंशतिवारं तु बिडोयं सत्वजारणे ॥७७॥

तीव्रानलबिडः १३—सुवर्णजारणे

देवदालीशिफाबिजं गुंजासैंधवटंकणम् ॥
समांशं निचुलक्षारमम्लवर्गेण सप्तधा ॥७८॥
कोशातकीदलरसैर्भावयेद्दिनसप्तकम् ॥
तीव्रानलो नाम बिडो विहितो हेमजारणे ॥७९॥

बिडः १४—हेम जारणे

मूलकार्द्रकवह्नीनां क्षारं गोमूत्रलोलितम् ॥
वस्त्रपूतं द्रवं ग्राह्यं गंधकं तेन भावयेत् ॥८०॥
शतवारं खरे धर्मे बिडोयं हेमजारणे ॥८१॥

बिडः १५—हेमजारणे

त्रिक्षारं पंचलवणं शंखं तालं मनःशिला ॥
दिनैकमम्लवर्गेण पक्वं स्याद्धेमजारणे ॥८२॥

बिडः १६—हेमजारणे

गंधकं नवसारं च जंबीराम्लेन मर्दयेद् ॥
शतवारं खरे धर्मे बिडोयं हेमजारणे ॥८३॥

बिडः—१७ सर्वजारणे

कन्याहयारिधत्तूरद्रवैर्भाव्यं तु गंधकम् ॥
शतधा तं खरे धर्मे बिडोयं सर्वजारणे ॥८४॥
अनेन ग्रसते शीघ्रं शुक्तिसंभवसंपुटे ॥८५॥

बिड १८:—अभ्रक ग्रासार्थे

सैंधवं गंधकं तुल्यं ताम्रवल्लीद्रवैः प्लुतम् ॥
अनेन बिडयोगेन गगनं ग्रसते रसः ॥८६॥

सिद्धबिडः १९—हेमजारणे

शिलागंधकसिंधूत्थं प्रत्येकं च पलं पलं ॥
पलत्रयं च भूनागं सर्वमेकत्र मर्दयेत् ॥८७॥
शोषयेच्च पुनर्देयं भूनागानां पलत्रयम् ॥
तद्वन्मर्द्यं पुनः शोष्यं पाचयेन्मंदवह्निना ॥८८॥

एवमष्टगुणं दत्वा मर्द्य पाच्यं विचूर्णयेत् ॥
अयं सिद्धबिडो योज्यो जारणे हेमकर्मणि ॥८९॥

सम्यक् संस्कृतगंधकाद्युपरसं सत्वं ततो व्योमजं
पश्चान्माक्षिकसत्वहाटकवरं गर्भद्रुतौ द्रावितम् ॥
रागै रंजितबीजजालमखिलं बाह्यां द्रुतिं द्वंद्वितां
सूते सर्वमिदं क्रमेण विधिना सिद्धैर्बिडैर्जारयेत् ॥९०॥

प्रथमं गंधक जार्यं । द्वितीयं उपरस सत्वानि । तृतीयं व्योम सत्वजारणं । चतुर्थं माक्षिक सत्वजारणम् । पंचमं हेमजारणम् । एतत्पंचानां गर्भद्रुतिः कार्या तदनंतरं यथाविधि बीजं देयम् ॥

इतिश्री पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके पक्वबीज वर्गसाधनं नाम दशमोपदेशः ॥ १० ॥

---

## ॥ अथ श्री वादिखंडे एकादशोपदेशः ॥

रसस्य १८ संस्काराः

सिद्धैः सूतवरस्य कर्मविविधं ख्यातं विचित्रैः क्रमैः
साध्यासाध्यविवेकतो ह्यनुभवन् दृष्ट्वा समस्तं मया ॥
युक्त्याष्टादशधा विशेषविधिना स्वेदादिवेधांतकं
दक्षाणां सुखसाध्यमेव सुखदं संतन्यते सांप्रतम् ॥१॥

| | | |
|---|---|---|
| १ स्वेदनं | ७ नियामश्च | १३ बाह्यद्रुतिस्तथा |
| २ मर्दनं | ८ दीपनं च | १४ रंजनं |
| ३ मूर्च्छा | ९ अनुवासनम् | १५ सारणं चानु |
| ४ उत्थापनं | १० जारणं | १६ सारणा |
| ५ पातनं त्रिधा | ११ चारणं चैव | १७ प्रतिसारणो |
| ३ निरोधनं | १२ गर्भ ( द्रुति ) | १८ क्रामणं देहलोहेषु |

कर्तव्यं च क्रमेण च ॥ २—३ ॥

धान्याम्लकरणम्

नानाधान्यैर्यथाप्राप्तै स्तुषवर्जैर्जलान्वितैः ॥
मृद्भाण्डं पूरितं रक्षेद्यावदम्लत्वमाप्नुयात् ॥४॥
तन्मध्ये भृंगराट् मुंडी विष्णुक्रांता पुनर्नवा ॥
मीनाक्षी चैव सर्पाक्षी सहदेवी शतावरी ॥५॥

त्रिफला गिरिकर्णी च हंसपादी च चित्रकम् ॥
समूलं खण्डयित्वा तु यथालाभं निवेशयेत् ॥६॥
पूर्वाम्लभाण्डमध्ये तु धान्याम्लकमिदं भवेत् ॥
स्वेदनादिषु सर्वत्र रसराजस्य योजयेत् ॥
अत्यम्लमारनालं वा तदभावे नियोजयेत् ॥७॥

१ स्वेदनम्—

त्र्यूषणं लवणं राजी चित्रकं त्रिफलार्द्रकं ॥
महाबला नागबला मेघनादः पुनर्नवा ॥८॥
मेषशृंगी चित्रकं च नवसारं समं समम् ॥
एतत्समस्तं व्यस्तं वा पूर्वाम्लेनैव मर्दयेत् ॥९॥
तत्कल्केन लिपेद्वस्त्रे यावदंगुलमात्रकम् ॥
तन्मध्ये निक्षिपेत्सूतं बध्वा पच्यादिनत्रयम् ॥
दोलायंत्रेम्लसंयुक्ते स्वेदितो जायते रसः ॥१०॥

२ मर्दनम्—

प्रक्षाल्य कांजिकैः सोष्णैस्तमादाय विमर्दयेत् ॥
अत्यम्लमारनालं तत्तदभावे नियोजयेत् ॥११॥
गृहधूमेष्टिकाचूर्णं दग्धोर्णा लवणं गुडम् ॥
राजिका त्रिफला कन्या चित्रकं बृहती कणा ॥१२॥
वंध्याकर्कोटकी चाथ व्यस्तं वाथ समस्तकम् ॥
क्वाथयेदारनालेन तेन मर्द्य त्र्यहं रसम् ॥
प्रक्षाल्य कांजिकेनैव समादाय विमूर्च्छयेत् ॥१३॥

३ मूर्च्छनम्—

मेषशृंगी कृष्णधूर्तो बला श्वेतापराजिता ॥१४॥
कन्याग्नित्रिफला चैव सर्पाक्षी सूरणं वचा ॥
गोजिव्हा चांगुली नीली मुरुंडी क्षीरकंदकम् ॥१५॥
राजिका काकमाची च रविक्षीरं च कांचनम् ॥
व्यस्तानां वा समस्तानां द्रावैश्चैषां विमर्दयेत् ॥१६॥
यामैकं रसराजं च मूषायां सन्निरोधयेत् ॥
पुटैकेन पचेत्तं तु भूधरे वाथ मर्दयेत् ॥१७॥

सर्वद्रावैर्यथापूर्वं रुध्वा रुध्वा विपाचयेत् ॥
इत्येवं सप्तधा कुर्याज्जायते मूच्छितो रसः ॥१८॥

४ उत्थापनम्—

जलैः सोष्णारनालैर्वा लोलनादुत्थितो भवेत् ॥
अथवा पातनायंत्रे पाचनादुत्थितो भवेत् ॥
एवमुत्थापितः सूतस्त्रिधा पात्यः क्रमेण तु ॥१९॥

५ ऊर्ध्वपातनम्—

काकमाची जया ब्राह्मी चांगेरी रक्तचित्रकम् ॥
अंकोली राजवृक्षश्च तिलपर्णी कुमारिका ॥२०॥
मण्डूकी चित्रकं पाठा काकजंघा शतावरी ॥
भूपाटली देवदाली निर्गुंडी गिरिकर्णिका ॥२१॥
शणपुष्प्यार्द्रकं शृंगी गोजिव्हा क्षीरकंदकम् ॥
नीली चैषां समस्तानां व्यस्तानां च द्रवैर्दिनम् ॥२२॥
ताम्रपादयुतं सूतं मर्दयेदम्लकैः सह ॥
तत्पिष्टः पातयेद्यंत्रे चोर्ध्वपातनके पुनः ॥२३॥
आदाय मर्दयेत्तद्वत्ताम्रचूर्णेन संयुतं ॥
पातयेन्मर्दयेच्चैवं ताम्रं दत्वा पुनः पुनः ॥
इत्येवं सप्तधा कुर्यान्मर्दनं पातनं क्रमात् ॥२४॥
उर्ध्वलग्नं समादाय अधःपातेन पातयेत् ॥२५॥

६ अधःपातनम्—

त्रिफला राजिका शिग्रुस्त्र्यूषं लवणचित्रकम् ॥
सूततुल्यं तु तत्सर्वं कांजिकैर्मर्दयेद्दिनम् ॥२६॥
तेन लिंपेदूर्ध्वभांडं पृष्ठे देयं पुटं लघु ॥
अधःपातनयंत्रे तु पातितं तु समुद्धरेत् ॥२७॥

७ तिर्यक्पातनम्

त्रिफला राजिका शिग्रुस्त्र्यूषं लवणचित्रकम् ॥
धान्याभ्रकं रसं सर्वं मर्दयेदारनालकैः ॥२८॥
नष्टपिष्टं तु तत्पात्यं तिर्यग्यंत्रे दृढाग्निना ॥२९॥

८ निरोधनम्—

लवणेनाम्बुपिष्टेन हंडिकांतर्गतं रसम् ॥

आच्छाद्याथ जलं किंचित्क्षिप्त्वा श्रावेण रोधयेत् ॥
ऊर्ध्वे लघुपुटं देयं लब्ध्वाप्यधो भवेद्रसः ॥३०॥

९ दीपनम्--

त्रिक्षारं पंचलवणं भूखगं शिग्रुमूलकम् ॥
स्वर्णपुष्पी च कासीसं मरिचं राजिका मधु ॥३१॥
क्षीरकंदो जया कन्या विजया गिरिकर्णिका ॥
काकजंघा शोणपुष्पी पातालगरुडी कणा ॥३२॥
वंध्याकर्कोटकी वह्निर्व्यस्तं वाथ समस्तकम् ॥
पेषयेदम्लवर्गेण तद्द्रवैर्मर्दयेद्रसम् ॥३३॥
दिनांते बंधयेद्वस्त्रे दोलायंत्रे त्र्यहं पचेत् ॥
पूर्वद्रावैघटे पूर्णे ग्रासार्थी जायते रसः ॥३४॥

१० अनुवासनम्--

दीपितं रसराजं तु जंबीररससंयुतम् ॥
दिनैकं धारयेद् धर्मे मृत्पात्रे वासितो भवेत् ॥३५॥
स्वेदनादिशुभकर्मसंस्कृतः सप्तकंचुकविवर्जितो भवेत् ॥
अष्टमांशमवशिष्यते तदा शुद्धसूत इति कथ्यते बुधैः ॥३६॥

इतिश्री पार्वतीपुत्र नित्यनाथसिद्ध विरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके स्वेदनादि अनुवासनांतं संस्कारनवकं नाम
॥ एकादशोपदेशः ११ ॥

---:o:---

# ॥ अथ श्री वादिखंडे द्वादशोपदेशः ॥

समुखविमुखसूते जारणार्थं प्रवक्ष्ये
विविधसुलभयोगैर्भोजनं गंधकस्य ॥
तदनु च घनचूर्णैर्भोजनं पाचनं स्यात्
निखिलसुतविभूत्यै वार्तिकानां सुखाय ॥१॥

गंधकजरणम् (१०० गुणित)

गंधकं सूक्ष्मचूर्णं तु सप्तधा बृहतीद्रवैः ॥
भावयेद्वाथ वृन्ताकरसेनैव तु सप्तधा ॥२॥
पलैकं पारदं शुद्धं काचकूप्यंतरे क्षिपेत् ॥
कर्षकं भावितं गंधं कर्पूरं माषमात्रकम् ॥३॥

क्षिप्त्वा तत्र मुखं रुध्वा मृदा कूपीं च लेपयेत् ॥
दीपाग्निना दिनं पश्चान्मुखमुद्‌घाटयेत्पुनः ॥४॥
जीर्णे गंधं च कर्पूरं दत्वा तद्वच्च जारयेत् ॥
एवं शतगुणे जीर्णे गंधकं जारयेद्रसे ॥५॥

गंधकजरणम् ( १०० गुणित )

कासीसं चैव सौराष्ट्री सज्जीक्षारेण मोदकम् ॥
शिग्रुतोयेन संयुक्तं कृत्वा भाव्यमनेन वै ॥६॥
सप्ताहं चूर्णितं गंधं तं गंधं जारयेत्पुनः ॥
इष्टिकागर्तमध्ये तु सम्यक् शुद्धरसं क्षिपेत् ॥७॥
मुखं स्वच्छेन वस्त्रेण छादयेत्तस्य पृष्ठतः ॥
दशांशं गंधकं दत्वा श्रावकेण निरोधयेत् ॥८॥
पृष्ठे लघुपुटं देयं जीर्णे गंधं पुनः क्षिपेत् ॥
एवं शतगुणं जार्यं गंधकं पारदे शनैः ॥९॥

पक्कबीज जारणम् १

तं रसं तप्तखल्वे तु क्षिपेद्वस्त्रेण गालितम् ॥
पादांशकं पक्कबीजं दत्वाम्लैर्मर्दयेद्दिनम् ॥१०॥
तं क्षिपेज्जारणायंत्रे जंबीररससंयुतम् ॥
तं यंत्रं धारयेद् घर्मे जारितो जायते रसः ॥११॥

पक्कबीज जारणम् २

सबिडं कलयेद्यंत्रे दिनैकं तु पुटे पचेत् ॥
जारितं स्यात्पुनर्बीजं दत्वा जार्यं च पूर्ववत् ॥
जारयेच्च पुनस्तद्वदेवं जार्यं समं क्रमात् ॥१२॥

पक्वबीज सारण।

जारितं सारणायंत्रे क्षिपेत्तैलं वसान्वितम् ॥
द्रावितं नालमूषायां पक्कबीजरसान्वितम् ॥१३॥
तद्यंत्रे धारयेदेवं सारितो जारयेद्रसः ॥
सारितं तत्पुनर्मर्द्यं पूर्ववद् बिडसंयुतम् ॥१४॥
जारयेत्कच्छपे यंत्रे जीर्णे बीजे तु सारयेत् ॥
पूर्ववत्सारणायंत्रे बीजेन द्विगुणेन वै ॥१५॥

पुनस्तं जारयेत्तद्वत्तथैव प्रतिसारयेत् ॥
त्रिगुणेन तु बाजेन पूर्ववज्जारयेत्पुनः ॥१६॥

रसस्य मुखबंधनं १

तद्रसं तालकं तुल्यं तैलं धत्तूरसंभवम् ॥
दिव्यौषधीगणद्रावं सर्वं मर्द्यं दिनावधि ॥१७॥
वज्रमूषांधितं पच्यात्करीषाग्नौ दिनावधि ॥
पुनर्दिव्यौषधीद्रावैर्मर्द्यं पाच्यं दिनावधि ॥
इत्येवं च पुनः कुर्यात्सूतो बद्धमुखो भवेत् ॥१८॥

तद्रसबंधनम्

तं रसं धौतमाक्षीकं तीक्ष्णं शुल्वं रसः शशी ॥
समांशं देवदाल्युत्थद्रवैर्मर्द्यं दिनावधि ॥१९॥
त्रिदिनं मधुसर्पिर्भ्यां मर्दितं गोलकीकृतम् ॥
वज्रमूषागतं रुध्वा शोष्यं तीव्राग्निना धमेत् ॥२०॥
खदिरांगारयोगेन खोटबद्धो भवेद्रसः ॥
तत्खोटं टंकणैः काचैः शोधयेद्वै धमन्धमन् ॥२१॥
तेजःपुंजो रसो बद्धो बालार्कसदृशो भवेत् ॥ ॥२२॥

तद्रसेन सुवर्णकरणम् ( रौप्यवेधः )

तद्रसं सिक्थकेनैव वेष्टयित्वा प्रपूजयेत् ॥
शतांशं तु द्रुते तारे क्रामणेनैव संयुतम् ॥२३॥
तत्तारं जायते स्वर्णं जांबूनदसमप्रभम् ॥
अष्टानवति भागं स्यादित्येवं वेधको मतः ॥२४॥

रसस्य मुखकरणम् २

अथ वक्ष्ये रसेंद्रस्य बासितस्य मुखं क्रमात् ॥
येन व्योमादिवैक्रांतं चरत्याश्वभिषेचितम ॥२५॥
अम्लवेतसजंबीरबीजपूरकभूखगैः ॥
त्रिदिनं मर्दमेत्सूतं भूनागैश्च दिनत्रयम ॥
तप्तखल्वे दिनं मर्द्यं सूतस्येत्थं मुखं भवेत् ॥२६॥

रसस्य मुखकरणम् ३

मध्यगतिसमायुक्तं कारयेदिष्टिकाद्वयम् ॥
धान्याभ्रं गंधकं शुद्धं प्रत्येकं दशनिष्ककम ॥२७॥

यामं जंबीरजैर्द्रावैर्मर्द्यं तेनैव लेपयेत् ॥
गर्तद्वयं समांशेन ह्यधोगर्तं सुशोधितम् ॥२८॥
विंशनिष्कं क्षिपेत्सूतमूर्ध्वं देयापरेष्टिका ॥
लिप्त्वा मृल्लवणैः संधिं दीप्ताग्निं ज्वालयेदधः ॥२९॥
अविच्छिन्नं दिवारात्रौ यावत्सप्तदिनावधि ॥
स्वांगशीतं समुद्धृत्य रसं किट्टविवर्जितम् ॥
इत्येवं तु त्रिधा कुर्याद्रसस्य तु मुखं भवेत् ॥३०॥

रसस्य मुखकरणम् ४

वंशनालांधितं सूतं भांडे गोमूत्रपूरिते ॥
त्रिसप्ताहं पचेच्चुल्यां सूतस्येत्थं मुखं भवेत् ॥३१॥

जारणसारणफलं—पूजाविधिश्च

समुखे निर्मुखे सूते वक्ष्यते जारणं क्रमात् ॥
खल्वपीतं रसो लिंगं मर्दनं मार्जनं स्मृतम् ॥३२॥
नानौषधीरसैः स्नानं सत्वैर्बीजैः प्रपूजनम् ॥
स्वर्णादिरत्नजातैश्च उपहारं प्रकल्पयेत् ॥३३॥
नैवेद्यं रंजनं दिव्यं सारणा स्याद्विसर्जनम् ॥
वेधनं देहलोहेषु सम्यक्पूजाविधेः फलम् ॥३४॥
यावद्दिनानि वह्नौ तु धारणे जार्यते रसः ॥
तावद्युगसहस्राणि शिवलोके महीयते ॥३५॥
यत्किंचिद्रसराजस्य साधनार्थं व्ययो भवेत् ॥
तत्सर्वं कोटिगुणितं दत्ते श्री भैरवो ध्रुवम् ॥३६॥
साधकानां सुधीराणां इह लोके परत्र च ॥
अतो भूपैर्वार्तिकेन्द्रैः साध्यः स्याद् भुक्तिमुक्तिदः ॥३७॥

॥ ॐ ह्रां ह्रीँ हृँ ह्रैँ ह्रौँ ह्रँ ह्रूँ फट् रसेश्वराय सर्वसत्वोपकाराय ग्रासं गृह्ण गृह्ण स्वाहा ॥ इति चारण मंत्रः

ॐ श्रीँ नमो अमृत अमृतोद्भव परामृतोद्भवाय ह्रूं फट् स्वाहा
अनेन सर्वं चारणास्तु अभिमंत्रयेत्

———:०:———

अथ चारणयोग्ये अभ्रके अभिषेकसंस्कारः

चारणयोग्याभ्रककरणम् १

अर्कक्षीरेण धान्याभ्रं दिनं मर्द्यं निरुध्य च ॥

कपोताख्ये पुटे पच्यात् क्षीरैर्यामं विमर्दयेत् ॥३८॥
रुध्वाधः पूर्ववत्पच्यादेवं वारचतुष्टयम् ॥
त्रिधा च मूलकद्रावै रंभाकंदद्रवैस्त्रिधा ॥३९॥
अपामार्गं काकमाची मीनाक्षी भृंगराण्मुनिः ॥
पुनर्नवा मेघनादो बिदारिश्चित्रकं तथा ॥४०॥
क्रमादेषां द्रवैरेव मर्दनं पुटपाचनम् ॥
एकैकेनैकवारं च दत्वा तद्द्रावयेत्पुनः ॥४१॥
शतावरी तालमूली कदली तंदुलीयकम् ॥
अर्कः पुनर्नवा शिग्रुर्यवचिंचा ह्यनुक्रमात् ॥४२॥
प्रतिद्रवैर्दिनैकं तु भावितं चारणे हितम् ॥४३॥

चारणयोग्याभ्रककरणम् २

अर्कक्षीरैस्तु धान्याभ्रं यामं मर्द्यं निरुध्य च ॥
कपोताख्ये पुटे पच्यादेवं वारांश्चतुर्दश ॥४४॥
कदली मुसली शिग्रुर्वंध्यांकोल्लार्कपीलुकम् ॥
नागवल्ली कुबेराक्षी भूम्यपामार्गतुंबरुः ॥४५॥
एषामेकद्रवं ग्राह्य कांजिके व्योमसंयुतम् ॥
सर्वमेतत्क्षिपेद्द् भांडे तन्मध्ये पाचयेत् त्र्यहम् ॥४६॥
पूर्वाभ्रं दोलिकायंत्रे समुद्धृत्याथ शोषयेत् ॥
कासीसं तुवरी सिंधुष्टंकणं च समं समम् ॥४७॥
सर्वमेतद्दशांशं तु क्षिप्त्वा तस्मिन्विमर्दयेत् ॥
दिनैकं तप्तखल्वे तु क्षिप्त्वा तस्मिन्विमर्दयेत् ॥४८॥
दिनैकं तप्तखल्वे तु तदभ्रं चारणे हितम् ॥४९॥

चारणयोग्याभ्रककरणम् ३

शतवारं द्रुतं नागं मुंडीद्रावे विनिक्षिपेत् ॥
तेन द्रावेण धान्याभ्रं मर्दितं सप्तधा पुटेत् ॥५०॥
मर्द्यं मर्द्यं निरुध्याथ कपोताख्ये पुटे पचेत् ॥
तत्तुल्यं गंधकं दत्वा पूर्वोक्तैर्मुंडिकाद्रवैः ॥५१॥
सस्तन्यैर्बीजपूरोत्थैर्द्रवैर्भाव्यं दिनावधि ॥
एतदभ्रं तु सूतस्य चारणे परमं हितम् ॥५२॥

सिद्धौषध्यः--सिद्धमूलिकाः

अभ्रकजारणे सिद्धमूलिकावर्गमाह

व्याघ्रपादी हंसपादी कदल्यग्निकुमारिकाः ॥
बृहती लांगली वज्री खण्डजारीन्द्रवारुणी ॥५३॥
वंध्याकर्कोटकी मूषा सर्पाक्षी शंखपुष्पिका ॥
मण्डूकी अग्निमथनी विख्याता सिद्धमूलिका ॥५४॥
एताः समस्ता व्यस्ता वा चोक्तस्थाने नियोजयेत् ॥५५॥

समुखसूते अभ्रचारणम्

अथातः समुखे सूते पूर्वाभ्रं षोडशांशकम् ॥
दत्वा मर्द्यं तप्तखल्वे सिद्धमूलीद्रवैर्दिनम् ॥५६॥
ततस्तं चारणायंत्रे जंबीररससंयुतम् ॥
घर्मे धार्यं दिनैकं तु चरत्येव न संशयः ॥५७॥

लक्ष--कोटिवेधी रसः--

चारितं बंधयेद्वस्त्रे दोलायंत्रे दिनावधि ॥
सिद्धमूलीद्रवैर्युक्तैः पातनाज्जीर्यते ह्यलं ॥५८॥
अजीर्णं चेत्पचेद्यंत्रे कच्छपाख्ये दिनावधि ॥
अष्टमांशं बिडं दत्वा चरत्येव न संशयः ॥५९॥
अनेन क्रमयोगेन चार्यं जार्यं पुनः पुनः ॥
जीर्णे शतगुणे सम्यक् सहस्रांशेन विध्यति ॥६०॥
सहस्रगुणिते जीर्णे लक्षवेधी भवेद्रसः ॥
तद्वल्लक्षगुणे जीर्णे कोटिवेधी भवेद्रसः ॥६१॥

लक्ष--कोटिवेधी रसः--

कृष्णाभ्रं वा सुवर्णं वा यथाशक्त्या तु जारयेत् ॥
पूर्ववत्क्रमयोगेन फलं स्यादुभयोः समम् ॥६२॥

कोटिवेधी रौप्यकरो रसः--

अनेनैव क्रमेणैव तारं वा श्वेतमभ्रकम् ॥
जारयेत्तु यथाशक्त्या तारकर्मणि शस्यते ॥६३॥

कोटिवेधी रसः—

पूर्ववत्पक्वबीजेन सारणादि यथाक्रमम् ॥
कर्तव्यं रसराजस्य वेधनं क्रामणं तथा ॥६४॥

चंद्रार्के जारयेत्सर्वं ताम्रं वा तारकर्मणि ॥
एवं शतगुणे जीर्णे सहस्रांशेन वेधयेत् ॥६५॥
सहस्रगुणिते जीर्णे पूर्ववत्सारणात्रयम् ॥
कृत्वा जार्यं पुनस्तद्वच्चारयेच्च त्रिधा पुनः ॥६६॥
इत्येवं च पुनः सार्यं पुनः सार्यं च जारयेत् ॥
मुखबंधादि वेधांतं कारयेत्पूर्ववद्रसे ॥६७॥
तेनैव लक्षभागेन दिव्यं भवति कांचनम् ॥
यदा लक्षगुणे जीर्णे त्रिधा सार्यं च जारयेत् ॥६८॥
इत्येवं सप्तधा कार्यं वंधयेच्च ततो मुखम् ॥
पूर्ववत्क्रामणांतं च कृतोसौ जायते रसः ॥६९॥
कोटिवेधी तु चंद्रार्के सत्यं शंकरभाषितम् ॥७०॥

निर्मुख रसचारणा १—

अथ निर्मुखसूतस्य वक्ष्ये चारणजारणे ॥
शुद्धसूते तु वैक्रांतं मारितं षोडशांशकम् ॥७१॥
क्षिप्त्वा मर्द्यं तप्तखल्वे सिद्धमूली रसैस्त्र्यहम् ॥
संस्कारेण ह्यनेनैव निर्मुखश्चरति ध्रुवम् ॥७२॥

निर्मुख रसचारणा २—

अथवा तप्तखल्वे तु मूलतासंयुतं रसम् ॥
मर्दयेत्रिदिनं पश्चात्पात्यं पातनयंत्रके ॥७३॥
संस्कारेण ह्यनेनापि निर्मुखं चरति क्षणात् ॥७४॥

अभ्रकजारणाक्रमेण वेधः—

अस्यैव जारणायोग्या व्योमसंस्कार उच्यते ॥
धान्याभ्रमम्लवर्गेण दोलायंत्रे त्र्यहं पचेत् ॥
स्नुहीक्षीरैस्ततो मर्द्यं यामैकं चांधितं धमेत् ॥७५॥
कपोताख्यपुटैकेन तमादायाथ मर्दयेत् ॥
मूलकं कदलीकंदं मीनाक्षी काकमाचिका ॥७६॥
मुनिराद्रकवर्षाभूमेघनादापमार्गकम् ॥
एरंडश्च द्रवैरेषां पृथग्देयं पुटं लघु ॥७७॥
दोलायंत्रे ततः पच्याद्वज्रीक्षीरैर्दिनावधि ॥

वचा निंबं धूमसारं कासीसं च सुचूर्णितम् ॥७८॥
अभ्रस्य षोडशांशेन प्रत्येकं मिश्रयेत्ततः ॥
मर्दयेत्ताम्रखल्वे तु चणकाम्लैर्दिनावधि ॥७९॥
नवसारैरयःपात्रं लेपयेत्तत्र निक्षिपेत् ॥
पारदं साधितं साभ्रं चणकाम्लं च कांजिकम् ॥८०॥
मृद्वग्निना पचेच्चुल्यां रसश्चरति तत्क्षणात् ॥
जारयेत्पूर्वयोगेन ततश्चार्यं च जारयेत् ॥८१॥
मात्रा युक्तिर्यथापूर्वं सेयं निर्मुखजारणा ॥
कृष्णाभ्रकं सुवर्णं च जार्यं स्याद्धेमकर्मणि ॥८२॥
तारं वा श्वेतमभ्रं वा जार्यं स्यात्तारकर्मणि ॥
सारणादि क्रामणान्तं यथापूर्वं तु जारयेत् ॥८३॥
कर्तव्यं सूतराजे तु तद्वद् भवति कांचनम् ॥
श्वेतेन जारयेत् श्वेतं यथाबीजं तथांकुरम् ॥८४॥

प्रोक्तं यथा सुगमसाधितपीतगंधं
कृष्णाभ्रहेमरजतं सितमभ्रकं च ॥
संसार्य तद्रसवरे वरवार्तिकेन्द्रः
कुर्यान्महाकनकभारसहस्रसंख्यम् ॥८५॥

इतिश्री पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके गंधकाभ्रहेमरजतजारणं नाम द्वादशोपदेशः ॥ १२ ॥

——:०:——

## ॥ अथ श्री वादिखंडे त्रयोदशोपदेशः ॥

दृष्टयोगफलसिद्धिदं ध्रुवं पारदस्य वरजारणे हितम् ॥
सत्वपातनमनेकयोगतो द्वंद्वमेलमभिषेकमार्यकम् ॥१॥

सत्वपातनं, द्वंद्वमेलनं, अभिषेकः

अभ्रकसत्वपातनात्पूर्वं संशोधनम्

मुस्ताक्वाथेन सप्ताहं कुर्याद्धान्याभ्रकं प्लुतम् ॥
शिग्रुसूरणरंभानां कंदस्यैकस्य च द्रवैः ॥२॥
पेटारीमूलजंबीरद्रावैर्वाप्यं परिप्लुतम् ॥
इत्थं प्लुतस्याभ्रकस्य पादांशं टंकणं क्षिपेत् ॥३॥

दिनैकं मर्दयेत्खल्वे युक्तमम्लेन केनचित् ॥४॥

अभ्रकादीनां सत्वपातनम् १

गुंजागुग्गुलुलाक्षोर्णासज्जीसर्जरसं गुडम् ॥
क्षुद्रमीनं यवक्षारं काचपिण्याकसूरणम् ॥५॥
भूलता त्रिफला वह्निः क्षीरकंदं पुनर्नवा ॥
धत्तूरोलांगली पाठा बला गंधकतिक्तकम् ॥६॥
गोक्षीरं पंचलवणं सर्पवृश्चिविषं मधु ॥
षड्बिंदुः क्षुद्रशंबूकमस्थीनि शशकस्य च ॥७॥
पारावतमलं त्र्यूषं इंद्रगोपं च शिग्रुकं ॥
गोधूमं सर्षपं तुल्यं छागीदुग्धेन मर्दयेत् ॥८॥
एतद्व्यस्तं समस्तं वा याममात्रेण पिण्डितम् ॥
अस्य पिण्डस्य भागैकं द्विभागं शोधिताभ्रकम् ॥९॥
पंचमाहिषभागैकं सर्वमेकत्र लोलयेत् ॥
कर्षांशा वटिकाः कार्याः किंचिच्छायाविशोषिताः ॥१०॥
खदिरांगारसंतप्ते कोष्ठीयंत्रे क्षिपन् क्षिपन् ॥
वटिकाः पंचपंचैव वंकनालेन संधमन् ॥११॥
समाप्तौ किट्टमादाय स्फोटयेत्स्वांगशीतलम् ॥
वर्तुलं सत्वमादाय शेषकिट्टं विचूर्णयेत् ॥१२॥
चूर्णार्द्धं पूर्वपिण्डं तद्वन्माहीषपञ्चकम् ॥
एकीकृत्य धमेत्तद्वत्सत्वं तत्तत्समाहरेत् ॥१३॥
इत्येवं च पुनः कुर्यात्रिधा सत्वं विमुंचति ॥
अनेन क्रमयोगेन कांतसत्वं च माक्षिकम् ॥१४॥
कठिनोपरसाश्चान्ये शुद्धा भूनागमृत्तिका ॥
मुंचंति सत्वसंघातं ग्राहयेत्तत्पृथक् पृथक् ॥१५॥

सूतजारणार्थे—सत्वस्य मृदूकरणम्

अभ्रसत्वं समादाय समांशं काचटंकणम् ॥
दत्वा दत्वा त्रिवारं तु वज्रमूषागतं धमेत् ॥१६॥
अम्लवर्गे स्नुहीपत्रं चींचाबीजं सवल्कलं ॥
कल्कयेत्तत्र तत्सत्वं सप्तवारं निषेचयेत् ॥१७॥

मृदुशुभ्रं भवेत्सत्वं सप्तवारं निषेचयेत् ॥१८॥

अभ्रसत्वपातनम् २

धान्याभ्रं दशभागं स्यात् शुद्धनागं त्रिभागकम् ॥
टंकणं माक्षिकं सूतं भागैकैकं सुशोधितम् ॥१९॥
ऊर्णा सज्जी यवक्षारं भागं भागं विमिश्रयेत् ॥
मर्द्यं मूत्राम्लवर्गाभ्यां यथाप्राप्तं दिनावधि ॥२०॥
अजापंचांगसंयुक्तं पूर्ववत्सत्वपातनम् ॥
कृत्वादाय मृदु साक्षान्निर्मलं योजयेदथः ॥२१॥

माक्षिक सत्वम् १--गुंजानिभं

दोलायंत्रे सारनाले माक्षिकं स्वेदयेद्दिनम् ॥
चूर्णितं मधुसर्पिर्भ्यां लोहपात्रे दिनं पचेत् ॥२२॥
आदाय भावयेद् घर्मे वज्रीक्षीरैर्दिनावधि ॥
गृहधूमैर्घृतैः क्षौद्रैः संयुक्तं मर्दयेद्दिनम् ॥ ॥२३॥
अंधमूषागतं ध्मातं सत्वं गुंजानिभं भवेत् ॥२४॥

माक्षिक सत्वम् २--इंद्रगोपवर्णं

कदलीकंदतोयेन माक्षिकं शतधातपे ॥
भावितं पाचयेद्यामं साज्यैर्वातारितैलकैः ॥
पूर्ववद्धमनात्सत्वं इंद्रगोपनिभं भवेत् ॥२५॥

माक्षिक सत्वम् ३--मणिनिभं

स्नुह्यर्कपयसा स्तन्यैर्माक्षिकं मर्दयेद्दिनम् ॥
कंकुष्ठं टंकणं चैव प्रतिपादांशमिश्रितम् ॥२६॥
मूकमूषागतं ध्मातं सत्वं मणिनिभं भवेत् ॥२७॥

माक्षिक सत्वम् ४--शुकतुंडनिभं

कदलीकंद तुलसी जंबीराणां द्रवैः क्रमात् ॥
भावयेन्माक्षिकं श्लक्ष्णं प्रतिद्रावेण सप्तधा ॥
रुध्वा ध्माते पतेत्सत्वं शुकतुंडनिभं शुभम् ॥२८॥

माक्षिक सत्वम् ५--शुल्वनिभं

मूत्रवर्गाम्लवर्गैश्च द्विसप्ताहं विभावयेत् ॥
माक्षिकं तीव्रघर्मेण दिनैरम्लैश्च मर्दयेत् ॥२९॥
मित्रपंचकसंयुक्तैर्वटी कृत्वा धमेद् दृढम् ॥

व्योमवद् वंकनालेन सत्वं शुल्बनिभं भवेत् ॥३०॥

माक्षिक सत्वम् ६--किंशुकनिभम्

स्तन्यैः कंकुष्ठकैश्चैव कदलीतोयसंयुतैः ॥
मित्रपंचकसंयुक्तैर्माक्षिकं दिनसप्तकम् ॥३१॥
भावितं मर्दयेद्यामं दिनं वातारि तैलकैः ॥
मृद्वग्निना पचेद्यामं यावद्भवति गोलकम् ॥
सत्वं किंशुकपुष्पाभं व्योमवद्धमनाद् भवेत् ॥३२॥

विमला सत्व पातनम् ७

विमलानां च शुद्धानां सम्यक्स्यात्ताप्यवद्विधिः ॥३३॥

माक्षिकस्य धौतसत्वम् ८

सुशुद्धं माक्षिकं चूर्णं मर्द्यमम्लेन केनचित् ॥
क्षालयेदारनालैस्तु ह्यधस्थं स्वर्णचूर्णवत् ॥३४॥
जायते तत्समुद्धृत्य धौतसत्वमिदं भवेत् ॥
योजयेद्द्रावणे चैव बीजानां यत्र यत्र वै ॥३५॥

माक्षिक सत्वम्--लाक्षानिभम् ९

माक्षिकं पंचमित्राक्तं सप्ताहान्ते वटीकृतम् ॥
पूर्ववद्धमनेनैव सत्वं लाक्षानिभं भवेत् ॥३६॥

मनःशिला सत्वम्--हेमनिभं १

अगस्त्यशिग्रुजैस्तोयैस्त्र्यहं भाव्या मनःशिला ॥
तालकौषधयोगेन सत्वं हेमनिभं भवेत् ॥

मनःशिला सत्वम् २--बालार्ककिरणोपमम्

गोमूत्रैर्मातुलुंगाम्लैर्दिनं भाव्या मनःशिला ॥
तां रक्तपीतपुष्पाणां रसैः पित्तैश्च भावयेत् ॥३७॥
दिनांते मर्दयेद्यामं मित्रपंचकसंयुतम् ॥
गुटिकां काचकूप्यंतः क्षिप्त्वा तां काचकूपिकाम् ॥
सर्वतोंगुलमानेन वस्त्रमृत्तिकया लिपेत् ॥३८॥
शुष्कां तां वालुकायंत्रे शनैर्मृद्वग्निना पचेत् ॥
शुष्के द्रवे निरुध्याथ सम्यक् मृल्लवणैर्मुखम् ॥३९॥
चंडाग्निना पचेत्तावद्यावद् द्वादशयामकम् ॥
स्वांगशीतं समुद्धृत्य भित्वा कूपीं समाहरेत् ॥४०॥

ऊर्ध्वलग्नं शिलासत्वं बालार्ककिरणोपमम् ॥४१॥

हरिताल सत्वम् १--स्फटिकोपमम्

भागा षोडश तालस्य विषं पारदटंकणम् ॥
श्वेताभ्रबंगयोश्चूर्ण प्रतिभागं विमिश्रयेत् ॥४२॥
सर्वं स्नुह्यर्कपयसा मर्दयेद्दिवसत्रयम् ॥
शिलावद् ग्राहयेत्सत्वं तालकात्स्फटिकोपमम् ॥४३॥

हरिताल सत्वम् २

स्नुक्क्षीरकटुतुंब्युत्थैस्तालं भाव्यं द्विसप्तधा ॥४४॥
तिलसर्षपशिग्रूणि लवणं मित्रपंचकम् ॥
एभिस्तुल्यं पूर्वतालं दिनमेकं विमर्दयेत् ॥४५॥
छिद्रमूषागतं ध्मातं भूधरे सत्वमाहरेत् ॥४६॥

हरिताल सत्वम् ३

लाक्षा राजी गुडं शिग्रुष्टंकणं लवणं तिलाः ॥
एभिस्तुल्यं शुद्धतालं मर्दयेद्द्रविदुग्धकैः ॥४७॥
दिनं वा वज्रिणीदुग्धैः कुष्मांडस्य द्रवैस्तथा ॥
तेन कल्केन लिप्तांतश्छिद्रमूषां निरोधयेत् ॥४८॥
पुटाद्वा धमनाद् ग्राह्यं सत्वं पातालयंत्रके ॥४९॥

हरिताल सत्वम् ४

तालकादष्टमांशेन देयं सूतं च टंकणम् ॥
कुष्मांडस्य रसैः स्नुह्याः क्षीरैर्मर्द्यं दिनत्रयम् ॥
तद्गोलं छिद्रमूषांतर्ग्राह्यं सत्वं च पूर्ववत् ॥५०॥

तुत्थ सत्वम् १--किंशुकप्रभम्

लाक्षाभया च भूनागं गृहधूमं जटाकणा ॥
निशाटंकणमध्वाज्यान्येभिस्तुल्यं च तुत्थकम् ॥५१॥
सर्वं मर्द्यमजाक्षीरैरंध्रमूषागतं धमेत् ॥
सत्वं किंशुकपुष्पाभं जायते नात्र संशयः ॥५२॥

तुत्थ सत्वम् २

हरिद्रासूरणांकोल्लं तंदुली गंधकं गुडम् ॥
मध्वाज्यटंकणं तुल्यं तुत्थमेभिः समं भवेत् ॥५३॥
स्तन्येन मर्दयेत्सर्वं छिद्रमूषां विलेपयेत् ॥

रुध्वा पातालयंत्रेण ध्माते सत्वं विमुंचति ॥५४॥

तुत्थ सत्वम् ३ शुकतुंडसमं

तुत्थस्य टंकणं पादं चूर्णयेन्मधुसर्पिषा ॥
तुत्थेन मिश्रितं ध्मातं कोष्ठीयंत्रे दृढाग्निना ॥
धामिते मुंचते सत्वं कीरतुंडसमप्रभम् ॥५५॥

वरनाग संज्ञकं सत्वम्—

सौवीरं तीक्ष्णचूर्णं च मूषायामंधयेत्समम् ॥
हठाद् ध्माते भवेत्सत्वं वरनागं तदुच्यते ॥५६॥

रसक सत्वम् १

क्षाराम्लं स्नेहपित्तैश्च क्रमाद्भाव्यं दिनं दिनम् ॥
पुष्पाणां रक्तपीतानां रसैर्भाव्यं दिनद्वयम् ॥५७॥
रसकं चूर्णयेत्पश्चादूर्णा लाक्षा निशाभया ॥
टंकणं शिग्रुधूमं च भूनागं सप्तमं भवेत् ॥५८॥
एभिः समं तु तच्चूर्णमजाक्षीरेण मर्दयेत् ॥
याममेतेन कल्केन लेप्या वार्ताकमूषिका ॥५९॥
शुष्का चार्धमुखांगारैर्ध्माते सत्वं समाहरेत् ॥६०॥

रसक सत्वम् २

रसकस्यैकभागं तु त्रिफलामित्रपंचकम् ॥
रजनीगृहधूमं च दशानामेकभागकम् ॥६१॥
अजाक्षीरैर्दिनं मर्द्यं अथवाम्लेन केनचित् ॥
पूर्ववद् ग्राहयेत्सत्वं रसकात्कुटिलप्रभम् ॥६२॥

वैक्रांत सत्वम् १—( रौप्यसदृशम् )

वंध्याचूर्णं च वैक्रांतं छायाया मर्दयेत्समम् ॥
अजामूत्रैर्दिनैकं तु सत्वं रजतवद् भवेत् ॥६३॥

वैक्रांत सत्वम् २

मोक्षमोरटपालाशक्षारं गोमूत्रगालितम् ॥
गृहीतमातपे शुष्कं वज्रकंदं च टंकणम् ॥६४॥
लाक्षा शिखिशिखातुल्यं वैक्रांतं सर्वतुल्यकम् ॥
मेषशृंगीद्रवैर्मर्द्यं एतत्सर्वं दिनावधि ॥६५॥
पिण्डितं मूकमूषांतः कृत्वा धाम्यं हठाग्निना ॥

तत्रैव मुंचते सत्वं वैक्रांतं रसबंधकम् ॥६६॥

वैक्रांत सत्वम् ३—( शंखकुदेन्दु सन्निभम् )

वैक्रांतानां पलैकं तु कर्षैकं टंकणस्य च ॥
रविक्षीरैर्दिनं भाव्यमथ शिग्रुद्रवैर्दिनम् ॥६७॥
गुंजा पिण्याक वह्नीनां प्रतिकर्षं नियोजयेत् ॥
एतेन गुलिकां कृत्वा कोष्ठीयंत्रे धमेद् दृढम् ॥६८॥
शंखकुन्देन्दुसंकाशं सत्वं वैक्रांतजं भवेत् ॥६९॥

वैक्रांत सत्वम् ४—इंद्रगोपसमम्

वैक्रांतं वज्रकंदं च समं स्नुक्पयसा समम् ॥
महिषीनवनीतं च सक्षौद्रं मर्दयेद्दिनम् ॥
पूर्ववद्धमनात्सत्वमिंद्रगोपनिभं भवेत् ॥७०॥

गैरिक सत्वम्

गैरिकं रक्तवर्गेण पीतवर्गेण भावितम् ॥
सप्ताहं मर्दयेद्धामं मित्रपंचकसंयुतम् ॥
तद्वटी कोष्ठिकायंत्रे सत्वं मुंचति निर्मलम् ॥७१॥

सौराष्ट्री सत्वम्

सितो सिता च सौराष्ट्री गोपित्तैर्भावयेत्तु ताम् ॥
शतवारं प्रयत्नेन मित्रपंचकसंयुतम् ॥
धमनान्मुंचते सत्वं क्रामकं कोष्ठियंत्रके ॥७२॥

सस्यक सत्वम्

सस्यकं चूर्णितं भाव्यं दिनं शशकरक्तकैः ॥
स्त्रीमूत्रैर्वाथ गोमूत्रैस्तत्पादांशां निशां क्षिपेत्
मर्द्यं करंजतैलेन यामैकं गोलकं च तत् ॥७३॥
अंधमूषागतं धाम्यं घटिकार्धं दृढाग्निना ॥
इंद्रगोपकसंकाशं सत्वं मुंचति शोभनम् ॥७४॥

कासीस सत्वम्

चतुर्विधं तु कासीसं रक्तं पितं सितासितम् ॥
मर्दयेत्पित्तवर्गेण तिक्तकोशातकीद्रवैः ॥७५॥
कासमर्दद्रवैश्चैव मित्रपंचकसंयुतैः ॥
तद्वटीः कोष्ठिकायंत्रे ध्माते सत्वं विमुंचति ॥७६॥

राजावर्तं सत्वम्

राजावर्तमयः पात्रे पाचयेन्माहिषैर्घृतैः ॥
पयोभिश्च दिनं पच्यान्मित्रपंचकसंयुतम् ॥७७॥
रजन्याः पंचगव्येन पिण्डीबद्धं तु कारयेत् ॥
खदिरांगारसंयोगात् कोष्ठ्यां सत्वं विमुंचति ॥७८॥

स्रोतोंजन सत्वम्

वल्मीकशिखराकारं भंगे नीलोत्पलद्युति ॥
घर्षणे गैरिकच्छायं स्रोतोंजनमिदं भवेत् ॥७९॥
राजावर्तकवत्सत्वं ग्राह्यं स्रोतोंजनादपि ॥८०॥

इति सत्वपातनविधिः

———:०:———

॥ अथ द्वन्द्वमेलापनम् ॥

व्योमसत्व मेलापनम्

व्यामसत्वस्य चूर्णं तु यत्किंचिद्धातुचूर्णकम् ॥
द्वन्द्वमेलापलिप्तायां मूषायां तद् द्वयं समम् ॥८१॥
ध्मातव्यमरिवर्गेण क्षिप्ते मिलति तत्क्षणम् ॥८२॥

सर्वसत्वमेलापनम् १

विषं टंकणगुंजाश्च खुरं शृंगं च भेषजम् ॥
मंडूकवसया पिष्ट्वा मूषालेपं तु कारयेत् ॥८३॥
तस्यां मिलति सत्वानि चूर्णानि विविधानि च ॥
त्रिक्षारं धातकीपुष्पं गुग्गुलुं च समं समम् ॥
स्त्रीस्तन्यैः पेषितो लेपो द्वंद्वमेलापने हितः ॥८४॥

सर्वसत्नमेलापनम् २

वर्षाभूः कदलीकंदः काकमाची पुनर्नवा ॥
गुंजा नरकपालं च टंकणं पेषयेत्समम्
अनेन पूर्ववल्लेपाद्धेमाभ्रं मिलति क्षणात् ॥८५॥

सर्वलोह सर्वसत्व महारसमेलापनम् १

तारं च व्योमसत्वं च अनेनैव तु मेलयेत् ॥
लांगली चमरीकेशान्कुशकार्पासयोः फलम् ॥८६॥
भूलतामिंद्रगोपं च पाषाणभेदिका समम् ॥
नारीस्तन्येन संपेष्य मूषालेपं तु कारयेत् ॥८७॥

सर्वलोहानि सत्वानि तथा चैव महारसाः ॥
मिलंति नात्र संदेहो तीव्रधामानलेन तु ॥८८॥

सर्वमेलापनम् २

विषं छुछुंदरीमांसं टंकणं समपेषितम् ॥
मूषालेपमनेनैव कृत्वा तत्र विनिक्षिपेत् ।
यत्किंचिद् द्वंद्वयोगं तु धमनेन मिलत्यलम् ॥८९॥

सर्वमेलापनम् ३

कंगुणीतैलसंपिष्टमपामार्गस्य भस्मकम् ॥
तेन प्रलिप्तमूषायां द्वंद्वं क्षिप्त्वा धमेद्धठात् ॥
मिलत्येव न संदेहस्तत्तन्मारकवापनात् ॥९०॥

सर्वद्वंद्व मेलापनम्

हेमाभ्रं नागताप्याभ्रं शुल्बाभ्रं गंधकेन च ॥
सिन्धूत्थहिंगुलाभ्यां तु तीक्ष्णाभ्रं धमनाद् दृढम् ॥९१॥
नागाभ्रं शिलया युक्तं बंगाभ्रं तालकेन च ॥
ताराभ्रं बंगतालाभ्यां तालवत्सर्वसत्वकम् ॥९२॥
मिलत्येव न संदेहः पूर्वमूषागतं क्षणात् ॥

बंगाभ्रसत्व मेलापनम् १

श्वेताभ्रकस्य सत्वं तु बंगचूर्णं समं समम् ॥९३॥
कदलीकंदतोयेन मर्दयेट्टंकणैः सह ॥
अंधमूषागतं ध्मातं बंगाभ्रं मिलति क्षणात् ॥९४॥

बंगाभ्रसत्व मेलापनम् २

गुंजा नरकपालं च टंकणं वनशिग्रुकम् ॥
स्त्रीस्तन्येन समं पिष्ट्वा मूषालेपं तु कारयेत् ॥९५॥
बंगं श्वेताभ्रसत्वं च चूर्णितं तत्र निक्षिपेत् ॥
रुध्वा ध्माते मिलत्येव तारकर्मणि जारयेत् ॥९६॥

बंगाभ्रसत्व मेलापनम् ३

अभ्रसत्वं विचूर्ण्यादौ तत्पादांशं तु टंकणम् ॥
पारदं टंकणांशं च काकमाचीद्रवैर्दिनम् ॥९७॥
पिष्ट्वा तद् गोलकं पेष्यमभ्रांशैर्बंगपत्रकैः ॥
पूर्वमूषागतं ध्मातं बंगाभ्रं मिलति क्षणात् ॥९८॥

॥ अथ अभिषेकः ॥

अभिषेकः १

सम्यगावर्तितं नागं पलैकं कांजिके क्षिपेत् ॥
पलानां शतमात्रे तु शतवारं द्रुतं द्रुतम् ॥९९॥
अनेन कांजिकेनैव शतवारं विभावयेत् ॥
यत्किंचिच्चारणावस्तु ततस्तं जारयेद्रसे ॥
अभिषेको ह्ययं ख्यातः कथ्यते तु मतांतरम् ॥१००॥

अभिषेकः २

त्रिक्षारं पंचलवणं कांक्षीकासीसगंधकम् ॥
माहिषं कांजिकैर्युक्तं ताम्रपात्रे दिनत्रयम् ॥१०१॥
स्थितं घर्मे पुनस्तस्मिन् द्रुतं नागं विनिक्षिपेत् ॥
तारकर्मणि बंगं वा शतवाराणि सेचयेत् ॥१०२॥
तद्द्रवं ताम्रपात्रस्थं अभिषेकं विदुर्बुधाः ॥
अनेन चारणावस्तु शतवाराणि भावयेत् ॥१०३॥

सारणायां संकेतः

द्वंद्वितं व्योमसत्वं च बीजानि विविधानि च ॥
द्वंद्वितं वज्रबीजं च भावितं सारयेत्सदा ॥१०४॥
स्वर्णादि लोहमखिलं कृतशुद्धचूर्णं योज्यं पृथग्गगनसत्ववरे समांशं ॥
तद्द्वंद्वितं चरति सूतवरोभिषिक्तं विप्रो यथा मधुरपायसमाज्ययुक्तम् ॥१०५॥

इतिश्री पार्वतीपुत्रश्रीनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके अभ्रकादिसत्वपातनादि अभिषेकांतं नाम त्रयोदशोपदेशः ॥१३॥

---:०:---

# ॥ अथ श्री वादिखंडे चतुर्दशोपदेशः ॥

सूतेन सत्वरचितेन च जारितेन
पक्वाख्यबीजगुणसंख्यसुसारितेन ॥
विज्ञाय यस्तु मतिमान् स तु वार्तिकेन्द्र-
श्चंद्रार्कवेधविधिना कनकं करोति ॥१॥

चारणम्

स्वर्णे नागं समावर्त्य माषमात्रं तु घर्षयेत् ॥
तप्तखल्वे ततस्तस्मिन्पलमेकं रसं क्षिपेत् ॥२॥

सिद्धमूलीद्रवं दत्वा मर्दयेत्कांजिकैर्दिनम् ॥
घर्मे वा तप्तखल्वे वा ततो ग्रासं तु दापयेत् ॥३॥
चतुःषष्ठ्यंशकं पूर्वं द्वंद्वं सत्वं विभावितम् ॥
दत्वा मर्द्यं दिनैकं तु चारणायंत्रके क्षिपेत् ॥४॥
सजंबीरैर्दिनं घर्मे धारितं चरति ध्रुवम् ॥५॥

जारणम्

त्रिक्षारं पंचलवणं अम्लवर्गं स्नुहीपयः ॥
गोमूत्रैर्लोलयेत्सर्वं तेन वस्त्रं घनं लिपेत् ॥६॥
तन्मध्ये जारितं सूतं बध्वा भूर्जेन वेष्टयेत् ॥
सिद्धमूल्यम्लसंयुक्तं दोलायंत्रे त्र्यहं पचेत् ॥७॥
उद्धृत्योष्णारनालेन क्षालयेल्लोहपात्रके ॥
वस्त्रपूतं ततः कृत्वा सोष्णपात्रे विमर्दयेत् ॥८॥
हस्तेनैव भवेद्यावत् सुधौतं पारदं पुनः ॥
चतुर्गुणेन वस्त्रेण क्षालयेन्निर्मलो भवेत् ॥९॥
अजीर्णे च पुनर्मर्द्यमम्लं दत्वा दिनावधि ॥
दोलायां स्वेदयेत्तद्वद् भवेज्जीर्णं न संशयः ॥१०॥

ग्रासग्राही रसः

इष्टिका गुडदग्धोर्णा गृहधूमं च सार्जिका ।
सैंधवेन युतं सर्वं षोडशांशं रसस्य तु ॥११॥
दत्वा ततोम्लवर्गेण घर्मे मर्द्य दिनावधि ॥
इष्टिकादम्लवर्गेण दोलायंत्रे दिनं पचेत् ॥
जीर्णे जीर्णे त्विदं कुर्याद् ग्रासग्राहो भवेद्रसः ॥१२॥

बीजानां जारणम्

द्वात्रिंशांशं ततो ग्रासं दत्वा चार्यं च जारयेत् ॥
पूर्ववत्स्वेदनांतं च कृत्वा ग्रासं तृतीयकम् ॥१३॥
षोडशांशं प्रदातव्यं तज्जीर्णे चाष्टमांशकम् ॥
जारयेत्पूर्वयोगेन ह्येवं ग्रास चतुष्टयम् ॥१४॥
ततः कच्छपयंत्रेण जार्यते तन्निगद्यते ॥
ऊर्ध्वाधश्चाष्टमांशेन ग्रासे ग्रासे बिडं क्षिपेत् ॥१५॥
चतुर्थांशं ततो ग्रासं ग्रासं देयं समं पुनः ॥

जीर्णे जीर्णे समं देयमेवं जार्यं च षड्गुणम् ॥१६॥
रागाणां ग्रहणार्थं च ग्रासे ग्रासे तु पूर्ववत् ॥
इत्येवं द्वंद्वयोगानां सत्वानां च विशेषतः ॥१७॥
स्वर्णादि सर्वलोहानां बीजानां जारणाहितम् ॥
कर्तव्यं वक्ष्यते तत्र मात्रायुक्तिश्च पूर्ववत् ॥१८॥

जारणम्

अभावे व्योमसत्वस्य कांतपाषाणसत्वकम् ॥
तीक्ष्णपाषाणसत्वं वा द्वंद्वितं व्योमसत्ववत् ॥१९॥
जारयेत्पूर्वयोगेन सर्वेषां स्यात्फलं समम् ॥
इत्येवं षड्गुणं द्वंद्वं यत्किंचिज्जारयेद्रसे ॥२०॥

सिद्धबीजकरणं तेन सारणम्

जारितं सिद्धबीजेन सारयेत्तन्निगद्यते ॥
ताप्यसत्वं घोषताम्रं शुद्धहेम समं समम् ॥२१॥
आवर्त्य द्वंद्वलिप्तायां मूषायामंधितं पुनः ॥
समुद्धृत्य पुनर्धाम्यं मूषायां प्रकटं धमेत् ॥२२॥
माक्षिकाद्धौतसत्वं च स्तोकं स्तोकं विनिक्षिपेत् ॥
स्वर्णशेषं भवेद्यावत्तावत्पाच्यं च तत्पुनः ॥२३॥
पूर्ववच्च धमेत्तावद्यावत्स्वर्णावशेषितम् ॥
ताप्यसत्वेन ताम्रेण द्वंद्वमेवं पुनः पुनः ॥२४॥
षड्वारं धमनेनैव ग्राह्यं स्वर्णावशेषितम् ॥
सिद्धबीजमिदं ख्यातं दाडिमीपुष्पवद् भवेत् ॥२५॥
अनेन सिद्धबीजेन पूर्ववत्सारणात्रयम् ॥
कृत्वाथ जारयेत्तद्वज्जीर्णे बध्वा मुखं तथा ॥२६॥
बंधनं शोधनं चैव क्रामणं चैव पूर्ववत् ॥
चंद्रार्के द्राविते योज्यं सहस्रांशेन कांचनम् ॥२७॥

॥ इति द्वंद्वसत्व जारणक्रमेण वेधः ॥

———:०:———

गंधकजारणम्--१६ गुणितम्

अथातः शुद्धसूतस्य जारणे पूर्वभावितम् ॥

अथ शुद्धस्य सत्वस्य जारयेत्पूर्वभाषितम् ॥
गंधकं तु तुलायंत्रे पश्चात्सर्वं ग्रसत्यलम् ॥२८॥
मुखनालान्विता ऊर्ध्ववक्त्रा स्याद् द्वादशांगुला ॥
दृढा लोहमयी कुर्यादनया सदृशी परा ॥२९॥
एकस्यां निक्षिपेत्सूतं अन्यस्यां गंधकं समम् ॥
एकस्या मुखमध्ये तु ह्यपरस्या मुखं क्षिपेत् ॥३०॥
लिप्त्वा मृल्लवणैः संधिं गंधकाधः पुटं लघु ॥
रसस्याधो जलं स्थाप्यं गंधधूमं पिबत्यलम् ॥३१॥
जीर्णे गंधे समुद्घाट्य तुल्यं गंधं च दापयेत् ॥
इत्येवं षोडशगुणं गंधं जार्यं पुनः पुनः ॥
जारितः सूतराजोयं वासनामुखितो भवेत् ॥३३॥

॥ इति गंधकधूम पातनेन रसस्य वासनामुखं भवति ॥

वासनामुखितरसजारणम्

व्योमसत्वं ताप्यसत्वं शुल्वं शुद्धं समं समम् ॥
आवर्त्य द्वंद्वलिप्तायां मूषायामथ चूर्णयेत् ॥३४॥
भावयेदभिषेकेण पूर्ववत्शतवारकम् ॥
पूर्ववज्जारयेदेतद्वासनामुखिते रसे ॥३५॥
तद्वज्जार्यं प्रयत्नेन यावद् भवति षड्गुणम् ॥
तत्सूते सारितं जार्यं सिद्धबीजं तु पूर्ववत् ॥३६॥
मुखं च बंधनं कृत्वा वेधायांतं प्रदापयेत् ॥
क्रामणेन समायुक्तं चंद्रार्कं कांचनं भवेत् ॥
सहस्रांशेन तत्सत्यं रसोयं कामरूपकः ॥३७॥

॥ इति वासनामुखिते सुते जारणायोगेन वेधः ॥

गंधक जारणं

पूर्ववत् शुद्धसूतस्य पूर्वसंस्कृतगंधकम् ॥
जारयेच्छड्गुणं सम्यक् तुलायंत्रेण पूर्ववत् ॥३८॥
तिक्तकोशातकीद्रावं लांगलीद्रावसंयुतम् ॥
दापयेत्पूर्वसूतस्य खल्वे मर्द्यं दिनावधि ॥३९॥
पादांशं पक्वबीजं च चारयित्वाथ जारयेत् ॥

पूर्ववद् विडयोगेन एवं जार्य समक्रमात् ॥४०॥
त्रिधाथ पक्वबीजं तु सारयित्वाथ जारयेत् ॥
तारे वेधं शतांशेन दापयेत्कांचनं भवेत् ॥४१॥

सहस्रवेधो रसः

तारं स्यादष्टानवति भागाः स्वर्णस्य भागकम् ॥
भागैकं वेधकं सूतं संख्येयं शतवेधके ॥४२॥
रसकस्य तु यत्सत्वं चूर्णितं वाभिषेकितम् ॥
पूर्ववत् क्रमयोगेन रसे चार्यं च जारयेत् ॥४३॥
यावदष्टगुणं पश्चात् समं कृष्णाभ्रसत्वकम् ॥
चार्यं जार्यं क्रमेणैव पक्वबीजं चतुर्गुणम् ॥४४॥
जारयेच्च पुनः सूते कच्छपाख्ये विडान्विते ॥
रागग्रहणपर्यंतं कृत्वा प्रक्षाल्य तं रसम् ॥४५॥
उन्मत्तमुनिपत्राणि रजनी काकमाचिका ॥
धान्याम्लैः पेषपेत्तुल्यं तद्द्रवैर्मर्दयेद्रसम् ॥४६॥
सप्ताहं तप्तखल्वे तु कच्छपे तु दिनं पचेत् ॥
ततो दिव्यौषधैरेव मर्दयेद्दिवसत्रयम् ॥४७॥
तं रुध्वा वज्रमूषायां त्रिदिनं तुषवह्निना ॥
स्वेदितं च पुनर्मर्द्यं तद्वद्रुध्वा धमेद् दृढम् ॥४८॥
कुक्कुटांडनिभं बद्धं जायते चूर्णयेत्पुनः ॥
ब्रह्मपुष्पद्रवमर्द्यं दिनैकं चांधयेत्पुनः ॥४९॥
पचेद् गजपुटेप्येवं देयं पुटचतुष्टयम् ॥
वृश्चिकाल्या द्रवैरेवं तद्वत्पुटचतुष्टयम् ॥५०॥
कुंकुमसुरसेनैव तद्वत्पुटचतुष्टयम् ॥
मातुलुंगरसेनैकं पुटं दत्वा समाहरेत् ॥५१॥
सहस्रांशेन तेनैव तं शुल्बं तु वेधयेत् ॥
शुद्धं वा द्रावितं नागं वेधं स्यात्क्रामणेन वै ॥
तत्सर्वं जायते स्वर्णं देवाभरणमुत्तमम् ॥५२॥

स्वर्णबीजम् १

स्वर्णार्कं तीक्ष्णनागं च सम्यक् सस्याभ्रकस्य च ॥

वैक्रांतस्य च सत्वं च चूर्णं कुर्यात्समं समम् ॥५३॥
द्वंद्वमेलापलिप्तायां मूषायामंधितं धमेत्
समुद्धृत्य तु तत्खोटं मूषायां प्रकटं धमेत् ॥५४॥
वापो माक्षिकचूर्णेन द्रुते देयः शनैः शनैः ॥
यावत्स्वर्णविशेषं स्यादर्कायां (स्यादर्काग्रान्) दापयेत्पुनः ॥५५॥
पूर्ववत्क्रमयोगेन धमेत्स्वर्णविशेषितम् ॥
इत्येवं च पुनः कुर्याज्जायते स्वर्णबीजकम् ॥५६॥

स्वर्णबीजम् २

अभ्रसत्वायसं ताम्रं चूर्णं कृत्वा समं समम् ॥
शुद्धताप्यस्य चूर्णं च ताम्रस्य द्विगुणं भवेत् ॥५७॥
मूषायां द्वंद्वलिप्तायां रुध्वा तीव्राग्निना धमेत् ॥
तत्खोटं सूक्ष्मचूर्णं च रुध्वा गजपुटे पचेत् ॥५८॥
एवं पंचपुटैः पक्वं द्रुते स्वर्णे च वाहयेत् ॥
धमेत्प्रकटमूषायां यावद्दशगुणं शनैः ॥५९॥
ताप्यचूर्णं प्रदातव्यं किंचित्किंचित्तु वापयेत् ॥
स्वर्णशेषं समुद्धृत्य स्यादिदं स्वर्णबीजकम् ॥६०॥

स्वर्णबीजयोगेन वेधः

स्वर्णबीजं समं सूते जारयेदभ्रसत्ववत् ॥
ततस्तेन शतांशेन मधुनाक्तेन लेपयेत् ॥६१॥
समं चंद्रार्कपत्राणि वेष्टयेच्चार्कपत्रकैः ॥
दोलायंत्रे सारनाले दशाहं पाचयेच्छनैः ॥ ॥६२॥
उद्धृत्यावर्तयेत्तानि दिव्यं भवति कांचनम् ॥६३॥

स्वर्णबीजम् ३

मृततीक्ष्णार्कभागं च ताप्यचूर्णं समम् ॥
एतद्वाह्यं द्रुते स्वर्णे यावद्दशगुणं शनैः ॥
स्वर्णशेषं समादाय स्यादिदं स्वर्णबीजकम् ॥६४॥

स्वर्णबीजम् ४

तीक्ष्णं कांतं मृतं चैव शुल्बं तारं समं समम् ॥
मूषायां द्वंद्वलिप्तायां रुध्वा तीव्राग्निना धमेत् ॥६५॥
तत्खोटं द्राविते स्वर्णे वाह्यं दशगुणैः शनैः ॥

पूर्ववत्ताप्यचूर्णेन स्वर्णबीजमिदं परम् ॥६६॥

स्वर्णबीजयोगेन वेधः ॥

यथेष्टं स्वर्णबीजैकं पादांशं जारयेद्रसे ॥
पूर्ववत्क्रमयोगेन सत्वबीजेन सारयेत् ॥६७॥
सारिते जारयेत्तद्वदनुसार्येण जारयेत् ॥
प्रतिसार्य ततो जार्यं मुखं बध्वा च बंधयेत् ॥६८॥
पंचांशं दशयोगेन तारेवेधं प्रदापयेत् ॥
क्रामणेन समायुक्तं दिव्यं भवति कांचनम् ॥६९॥

स्वर्णबीजस्य जारणं वेधश्च १

नागं रसकसत्वं च ताम्रं भागं क्रमोत्तरम् ॥
ध्मापितं वाहयेत्स्वर्णं षड्गुणं वापयेच्छनैः ॥७०॥
स्वर्णशेषं तु तज्जार्यं समांशं पारदे क्रमात् ॥
यथापूर्वं मारणादि बंधनांतं च कारयेत् ॥७१॥
अनेन षष्ठिभागेन पूर्ववत्कांचनं भवेत् ॥७२॥

स्वर्णबीजकरणं तस्य जारणं वेधश्च २

ताप्येन मारयेच्छुल्वं यथागंधेन मारितम् ॥
तत्ताम्रं वाहयेन्नागे मूषामध्ये धमन् धमन् ॥७३॥
शनैः शतगुणं यावत्ताप्यचूर्णं क्षिपन्क्षिपन् ॥
तत्ताम्रं वाहयेत्स्वर्णे द्वात्रिंशद्गुणितं क्रमात् ॥७४॥
स्वर्णशेषं तु तद्बीजं समांशं जारयेद्रसे ॥
अनेनैव तु बीजेन सारयेज्जारयेत्पुनः ॥७५॥
पूर्ववत् क्रमयोगेन बंधनांतं च कारयेत् ॥
क्रामणेन समायुक्तं सहस्रांशेन वेधयेत् ॥
चंद्रार्के जायते स्वर्णं देवाभरणमुत्तमम् ॥७६॥

स्वर्णबीजं तस्य जारणं वेधश्च १ लक्षवेधी

रसकाभ्रकयोः सत्वं ताम्रचूर्णं क्रमोत्तरम् ॥
मूषायां द्वंद्वलिप्तायां रुध्वा ध्माते समुद्धरन् ॥
तत्खोटांशं ताप्यचूर्णं दत्वा चाम्लेन मर्दयेत् ॥
रुध्वा लघुपुटे पच्यादेवं पंचपुटैः पचेत् ॥७८॥
तच्चूर्णं वाहयेत्स्वर्णे धाम्यमाने शनैः शनैः ॥

सहस्रगुणितं यावत्तद्बीजं जारयेद्रसे ॥७९॥
यावच्छतगुणं यत्नात्तेनैव तु सारयेत् ॥
जारणं सारणं चैव बंधनांतं च पूर्ववत् ॥८०॥
कृत्वाथ लक्षभागेन तारं भवति कांचनम् ॥८१॥

स्वर्णबीजं तज्जारणं वेधश्च वेधश्च दशसहस्रवेधी ४

अभ्रसत्वं रविं नागं क्रमवृद्ध्या विचूर्णयेत् ॥
मूषायां द्वंद्वलिप्तायां रुध्वा तीव्राग्निना धमेत् ॥८२॥
तत्समं ताप्यचूर्णं तु सर्वमम्लेन मर्दयेत् ॥
रुध्वा पंचपुटैः पच्यात् तच्चूर्णं वाहयेद् द्रुतम् ॥८३॥
स्वर्णे शतगुणं यावत्तावत्स्वर्णं च जारयेत् ॥
युक्त्या शतगुणं यावत्त्रिधानेनैव सारयेत् ॥८४॥
सारिते जारणं कुर्याद् बंधनांतं च पूर्ववत् ॥
अयुतांशेन तेनैव तारं भवति कांचनम् ॥८५॥

कोटिवेधी रसः

अथवा पूर्वचूर्णं तु सहस्रगुणितं द्रुते ॥
स्वर्णे वाह्यं क्रमेणैव तद्बीजं जारयेद्रसे ॥८६॥
सहस्रगुणितं यावत् त्रिधा तेनैव सारयेत् ॥
सारितं जारयेत्पश्चात् पुनः सार्यं च जारयेत् ॥८७॥
सप्तशृंखलिकायोगात्सारितं जारयेद् बुधः ॥
मुखं बध्वा रसं बध्वा कोटिवेधी भवेद्रसः ॥
क्रामणेन समायुक्तं चंद्रार्कं कांचनं भवेत् ॥८९॥

॥ इतिस्वर्णरौप्यबीजजारणयोगेन वेधः ॥

शतवेधी तारबीजम् वेधः १

विमला तालकं तीक्ष्णं भागवृद्ध्या विचूर्णयेत् ॥
मूषायां द्वंद्वलिप्तायां तत्खोटं सुविचूर्णयेत् ॥९०॥
अम्लैर्मर्द्यं पुटे पच्यादित्येवं पंचधा पुटेत् ॥
तारे दशगुणं वाह्यं तालचूर्णं क्षिपन्क्षिपन् ॥९१॥
एतद् बीजं समं सूते जारयेत्पूर्ववत्क्रमात् ॥
ततस्तु तारबीजेन सारयेत्सारणात्रयम् ॥९२॥

तेनैव तु शतांशेन द्रुतं ताम्रं तु वेधयेत् ॥
शंखकुंदेन्दुसंकाशं तारं भवति शोभनम् ॥९३॥

शतवेधी तारबीजम् वेधः २

मृतवंगं तालसत्वं समं चूर्णं प्रकल्पयेत् ॥
द्विरष्टगुणितं तारे वाहयेत्तं धमन् धमन् ॥९४॥
तद्बीजं जारयेत्सूते यावद्दशगुणं क्रमात् ॥
ततस्तं तारबीजेन सारयेत्सारणात्रयम् ॥९५॥
सहस्रांशेन चानेन ताम्रवेधं प्रदापयेत् ॥
तत्ताम्रं जायते तारं शंखकुंदेन्दुसन्निभम् ॥९६॥

शतवेधी तारबीजम् ३

श्वेताभ्रतालयोः सत्वं रसकस्य च सत्वकम् ॥
चतुर्थं तारमाक्षीकं समं चूर्णं प्रकल्पयेत् ॥९७॥
चूर्णतुल्यं बंगचूर्णं सर्वमेकत्र तं धमेत् ॥
द्वंद्वमेलापलिप्तायां जातं खोटं विचूर्णयेत् ॥९८॥
अम्लपिष्टं पुटे पच्यादित्येवं पंचधा पुटेत् ॥
तच्चूर्णं वाहयेत्तारे यावद्दशगुणं धमेत् ॥९९॥
तत्तारं रसराजस्य समं जार्यं क्रमेण वै ॥
पूर्ववच्च त्रिधा सार्यं शतवेधी भवेद्रसः ॥१००॥

तारंबीजं दशसहस्रवेधी

एवं सत्वाभ्रसत्वं(?) च चूर्णं द्वंद्वं च पूर्ववत् ॥
पादांशं तालकं दत्वा अम्लैः पिष्ट्वा निरुध्य च ॥१०१॥
पचेत्पंचपुटैरेवं तारे वाह्यं द्विषड्गुणम् ॥
एतद्बीजं समं जार्यं प्रत्येकं दशभागकम् ॥१०२॥
बंगं श्वेताभ्रसत्वं च प्रत्येकं दशभागकम् ॥
ताराख्या विमला तीक्ष्णं प्रत्येकं पंचभागिकम् ॥१०३॥
द्वंद्वमेलापलिप्तायां मूषायां तं धमेद् दृढम् ॥
अम्लपिष्टं पुटे पाच्यं पंचवारं पुनः पुनः ॥१०४॥
तद्वाह्यं तारभागस्य तारचूर्णं क्षिपन् क्षिपन् ॥
तद्बीजं रसराजस्य जार्यं शतगुणं क्रमात् ॥१०५॥

सारयेत्तारबीजेन विधिना सारणात्रयम् ॥
अनेनैवायुतांशेन द्रुतं ताम्रं तु वेधयेत् ॥
जायते रजतं दिव्यं शंखकुन्देन्दुसन्निभम् ॥१०६॥

इत्थं रसे कनकबीजमनंतयोगैः
कृत्वा भिषक् तमखिलं विधिवच्च जार्यम् ॥
तेनैव हेमनिचयं रजतं च कृत्वा
दारिद्र्यदाहमखिलेषु जनेषु कुर्यात् ॥१०७॥

इतिश्री पार्वतीपुत्र नित्यनाथसिद्ध विरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके द्वंद्वसत्वादि बीजजारणं हेमजारणं हेमतारकरणं नाम ॥ चतुर्दशोपदेशः १४ ॥

———:०:———

# ॥ अथ श्री वादिखंडे पंचदशोपदेशः ॥

बीजसाधनमनेकयोगतो गर्भयोग्यमथ रंजने हितम् ॥
जारितस्य नरपारदस्य वै तत्समस्तमधुना निगद्यते ॥१॥

॥ अथ गर्भद्रावणयोग्यं बीजकरणम् ॥

बीजसाधनम् १

गंधकं माक्षिकं नागं सर्वं तुल्यं विचूर्णयेत् ॥
त्रिगुणं वाहयेत्स्वर्णे द्रावितं तु धमन् धमन् ॥२॥
पूतिबीज (प्रतिबीज) मिदं स्थूलं गर्भे द्रवति तत्क्षणात् ॥३॥

बीजसाधनम् २

नागं स्वर्णे समं: ताप्यं शिलाचूर्णं क्षिपन् क्षिपन् ॥
जीर्णे नागे पुनर्देयं एवं वारत्रयं शनैः ॥
एतद् बीजं द्रवत्येव रसगर्भे तु मर्दनात् ॥४॥

बीजसाधनम् ३

ताप्यसत्वं सुवर्णं च धमेत्ताप्यं क्षिपन्क्षिपन् ॥
इत्येवं त्रिगुणं वाह्यं ताप्यसत्वं च हाटके ॥
तद्बीजं रसराजस्य गर्भे द्रवति तत्क्षणम् ॥५॥

बीजसाधनम् ४

ताप्यसत्वं सुवर्णं च समांशं द्रावयेत्ततः ॥

कंटवेधीकृतं पत्रं गंधेन लवणेन च ॥६॥
क्षिप्त्वा साम्लेन तत्पच्यात्पुटे हेमावशेषितम् ॥
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ॥७॥

बीजसाधनम् ५

सँघरेन समं ताप्यमम्लैर्मर्द्य पुटे पचेत् ॥
पुनर्मर्द्य पुनः पाच्यं यावद्द्वादशवारकम् ॥८॥
अस्य तुल्यं मृतं नागं सर्वमम्लेन पेषयेत् ॥
अनेन स्वर्णपत्राणि लिप्त्वा लिप्त्वा धमेद् दृढम् ॥९॥
द्रुतं च वापयेत्तं तु सप्तवारं पुनः पुनः ॥
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ॥१०॥

॥ इति गर्भद्रावकयोग्यं बीजकरणम् ॥

बीजसाधनम् ६

शिला सौवर्चलं ताप्य गंधकासीसटंकणम् ॥
मर्दयेच्चणकाम्लैश्च सर्वमेतद्दिनावधि ॥११॥
रसस्यैतत् षोडशांशं दत्वा बीजं च दापयेत् ॥
मुच्यते यत्र यत्रैव तत्तद् द्रवति तत्क्षणात् ॥१२॥

इति गर्भद्रावक योगः

गर्भद्रावित बीजस्रुते ग्रासः

अपामार्गपलाशोत्थ भस्मक्षारं समाहरेत् ॥
टंकणं च यवक्षारं कासीसं च सुवर्चलम् ॥१३॥
सामुद्रं सैंधवं राजी माक्षिकं नवसारकम् ॥
कर्पूरं कांजिकं तुल्यं स्नुह्यर्कक्षीरमर्दितम् ॥१४॥
मूषालेपमनेनैव कृत्वा कुर्याद्विडेन च ॥
लेपमंगुलमानेन मूषायंत्रमिदं भवेत् ॥१५॥
गर्भद्रावितबीजात्तु सूतमत्र विनिक्षिपेत् ॥
रुध्वा स्वेद्यं दिनैकं तु कारीषाग्नौ ग्रसत्यलम् ॥१६॥

रसरंजकं १ ( अथ रंजकबीजम )

ताप्यसत्वाभ्रयोः सत्वं द्वंद्वितं द्रावयेत्पुनः ॥
मृतशुल्वं ताप्यचूर्णं तस्मिन्वाह्यं शनैः शनैः ॥१७॥
त्रिगुणे वाहिते तस्मिन् रंजितं वाहितं तु तत् ॥ ॥१८॥

रसरंजकम् २

गोमूत्रै रक्तवर्गं तु पिष्ट्वा तेनैव भावयेत् ॥
हिंगुलं माक्षिकं गंधं शिलाचूर्णं समं समम् ॥१९॥
भावितं सप्तवाराणि शोष्यं पेष्यं पुनः पुनः ॥
तीक्ष्णं ताम्रं समं चूर्ण्यं पूर्ववद् द्वंद्वमेलितम् ॥२०॥
तस्मिन् द्रुतं पूर्वचूर्णं वापयित्वाथ सेचयेत् ॥
रक्तवर्गसमायुक्ते तैले ज्योतिष्मतीभवे ॥
इत्येवं दशधा कुर्यात्स्यादिदं रसरंजकम् ॥२१॥

रसरंजकम् ३

रक्तवर्गेण गोमूत्रैर्भावयेद्दरदं त्रिधा ॥
समांशे विमले ताम्रे द्राविते वाहयेद्धमन् ॥
सप्तधा दरदं तं तु स्यादिदं रसरंजकम् ॥२२॥

रसरंजकम् ४

स्वर्णनागं व्योमसत्वं समांशं द्वंद्वमेलितम् ॥
शिला गैरिक माक्षीकं रसकं रक्तवर्गकम् ॥२३॥
समांशं चूर्णयेत्सर्वं वापो देयो ह्यनेन वै ॥
पूर्वद्वंद्वितखोटस्य द्रावितस्य पुनः पुनः ॥२४॥
दशवारं कृते वापे रंजकोयं रसस्य च ॥२५॥

नागवेधः

यवचिंचारसैर्भाव्या रक्तवर्णा मनःशिला ॥
विंशवारं प्रयत्नेन तेन कल्केन लेपयेत् ॥२६॥
नागपत्रं पुटे पच्याद् यावच्चूर्णमुपागतम् ॥
रसकस्य तु भागांस्त्रीन्भागैकं दरदस्य च ॥२७॥
शिलागंधविषाणां च त्रयाणामेकभागकम् ॥
पेषयेन्मातुलुंगाम्लैस्तेन कल्केन लेपयेत् ॥२८॥
मूषागर्भे क्षिपेत्तत्र पूर्वनागं क्षिपेत्ततः ॥
द्रुतं यावत्समुद्धृत्य लिप्त्वा मूषां पुनर्धमेत् ॥२९॥
इत्येवं सप्तधा धाम्यं नागं स्वर्णनिभं भवेत् ॥

द्रावणं जारणं वेधः ( सहस्रवेधी )

पीताभ्रकस्य सत्वं तु पूर्वनागं च तत्समम् ॥३०॥

द्वंद्वितं पूर्वयोगेन ह्यभिषिक्तं च कारयेत् ॥
समुखे सूतराजे तु पूर्ववत् षड्गुणं क्रमात् ॥३१॥
ततस्तस्य रसेन्द्रस्य गर्भद्रावणबीजकम् ॥
पादांशं दापयेत्खल्वे मातुलुंगद्रवैः सह ॥३२॥
मर्दयेच्चणकाम्लैर्वा गर्भद्रावणकेन वा ॥
द्रवत्येव तु तद्गर्भे मूषायंत्रेथ जारयेत् ॥ ॥३३॥
इत्येवं द्रावितं जार्यं यावद् बीजसमं रसे ॥
सारणादित्रयेणांतं पूर्ववत्कारयेत् क्रमात् ॥३४॥
तारारिष्टमहिं शुल्वं यथेष्टैकं तु वेधयेत् ॥
सहस्रांशेन तेनैव दिव्यं भवति कांचनम् ॥३५॥

सहस्रवेधी रसः

स्वर्णेन द्वंद्वितं वज्रं पूर्ववच्चाभिषेकितम् ॥
जारयेत्समुखे सूते समांशं अभ्रसत्ववत् ॥३६॥
जारितं जारयेत्तेन स्वर्णवज्रेण वै त्रिधा ॥
मुखं बध्वा रसं बध्वा क्रामणेन तु योजयेत् ॥
चंद्रार्के तु सहस्रांशं दिव्यं भवति कांचनम् ॥३७॥

गंधनागद्रुतिः

वृषस्य मूत्रमादाय गजस्य महिषस्य वा ॥
तन्मध्ये सूतनागं तु द्रावितं सप्तधा क्षिपेत् ॥३८॥
ततस्तस्यैव पत्राणि कंटवेध्यानि कारयेत् ॥
गंधकं चूर्णितं शुद्धं पत्राणां तु चतुर्गुणम् ॥३९॥
अलक्तकेन संसिक्तं कार्पासपत्रवत्कृतम् ॥
तस्य शुष्कस्य पृष्ठे तु नररोमाणि दापयेत् ॥४०॥
तत्पृष्ठे चूर्णितं गंधं ततो नागदलानि च ॥
गंधकं नररोमाणि तत्कार्पासं च पृष्ठतः ॥४१॥
अनेन कारयेद्वर्तिं बहिः सूत्रेण वेष्टयेत् ॥
करंजतैलमध्ये तु दशरात्रं तु धारयेत् ॥४२॥
प्रज्वाल्य चोभयाग्रे तु द्रुतं तैलं समाहरेत् ॥
भाण्डे सकांजिके चैव तस्मादुद्धृत्य रक्षयेत् ॥

काचकूप्यां प्रयत्नेन गंधनागद्रुतिस्त्वियम् ॥४३॥

तत्र पूर्वरसशोधनम्

शुद्धसूतं दृढं मर्द्यं रजनीचूर्णसंयुतम् ॥
चूर्णं यावद् भवेत्कृष्णं क्षालयेदुष्णकांजिकैः ॥४४॥
एवं त्रिसप्तधा कुर्यात्ततो जारणमारभेत् ॥

पश्चात् गंधनागद्रुतिजारणा

अम्लैर्मनःशिलां पिष्ट्वा तेन लेपं तु कारयेत् ॥४५॥
गोस्तनाकारमूषायामस्यां पूर्वरसं क्षिपेत् ॥
चतुःषष्ठ्यंशतः पूर्वां देया गंधद्रुतिः क्रमात् ॥४६॥
रुध्वा मूषां विशोष्याथ गर्ते गोमयपूरिते ॥
मूषार्धं विन्यसेत्तत्र करीषतुषवह्निना ॥४७॥
कपोताख्यं पुटं देयं स्वांगशीतं समुद्धरेत् ॥
दद्यादजीर्णशंकायां सिंहवल्लीरसस्य तु ॥४८॥
चतुर्बिंदुप्रमाणं तु तद्द्रुतौ पुटे पचेत् ॥
एवं पुनः पुनर्जार्यं गंधनागद्रुतिः क्रमात् ॥४९॥
त्रिगुणं जारितः सूतो भवेज्जांबूनदप्रभः ॥
अस्य सूतस्य पादांशं पक्वबीजं सुचूर्णितम् ॥
मर्दयेच्चणकाम्लेन यामाद् गर्भे द्रवत्यलम् ॥५०॥

तेन जारितरसेन वेधः

मूषायंत्रगतं द्राव्यं पूर्ववत् स्वेदनेन वै ॥
जीर्णे बीजं पुनर्दत्वा द्राव्यं गर्भेथ जारयेत् ॥५१॥
एवं बीजं समं जार्यं पक्वं वा रंजने क्रमात् ॥
गर्भे द्रावणबीजं वा यथेष्टैकं तु जारयेत् ॥५२॥
ततस्तु त्रिगुणं रीतिस्तारं वाह्यं धमन् धमन् ॥
तारारिष्टं भवेत्तत्तु कृत्वा पत्रं प्रलेपयेत् ॥५३॥
सक्षौद्रं पूर्वसूतेन द्वात्रिंशांशेन तत्पुनः ॥
वेष्ट्यमर्कदलैः पच्याद्दोलायंत्रे सकांजिकैः ॥५४॥
दशाहांते समुद्धृत्य द्रावितं कांचनं भवेत् ॥५५॥

सूते व्योमसत्वचारणजारणं

सम्मुखे निर्मुखे वाथ रसराजे तु जारयेत् ॥

पूर्ववद्व्योमचूर्णं तु चारितं जारयेत् क्रमात् ॥५६॥
चतुःषष्ठिगुणं यावत्ततः सार्यं च जारयेत् ॥
चारयेज्जारयेत्तद्वत् यावत् षष्ठिगुणं भवेत् ॥
ततो माक्षिकसत्वं च पादांशं तत्र जारयेत् ॥५७॥

॥ इति चारण जारणम् ॥

गर्भे द्रावणं

महारसैश्चोपरसैर्यत्किंचित्सत्वमाहरेत् ॥
तन्मध्यगं तु पादांशं सूते दत्वा विमर्दयेत् ॥५८॥
तप्तखल्वे चतुर्यामं गर्भद्रावकसंयुतम् ॥
तत्तत्सर्वं द्रवत्येव मूषायंत्रेथ जारयेत् ॥५९॥
इत्येवं सर्वसत्वानि द्रावयोगाच्च जारयेत् ॥

गर्भद्रावितानां जारणं

रंजितं पक्कबीजं च शुद्धं ताम्रं च हाटकम् ॥६०॥
गर्भद्रावणबीजं च मृततीक्ष्णं समं समम् ॥
सर्वं च मर्दितं खोटं कृत्वा धाम्यं पुनः पुनः ॥६१॥
क्षिपेन्माक्षिकचूर्णं च ताम्रे तीक्ष्णे क्षयं गते ॥
समुद्धृत्य तु तद् बीजं पादांशं पूर्वपारदे ॥६२॥
पूर्ववद् द्रावयेद् गर्भे मूषायंत्रेथ जारयेत् ॥
द्वात्रिंशरद् गुणितं बीजं क्रमेणानेन जारयेत् ॥
जीर्णे गर्भे द्रुतं सूतं रंजयेत्तन्निगद्यते ॥६३॥

जारितानां पुनः रंजनं

गंधेन यन्मृतं नागं पक्कबीजस्य साधनम् ॥
तन्नागं हेमसंतुल्यमंधमूषागतं धमेत् ॥६४॥
तच्चूर्णमभिषिक्तं च पादांशं दापयेद्रसे ॥
मर्दयेदम्लवर्गेण गर्भद्रावणकेन वा ॥६५॥
तप्तखल्वे चतुर्यामं मूषायंत्रेथ जारयेत् ॥
अनेन क्रमयोगेन जारयेत्तं कलागुणम् ॥६६॥

बीजद्रावणं रंजनं सारणं ( कोटिवेधी )

मृतं शुल्बं मृतं तीक्ष्णं स्वर्णं वाह्यं तु षड्गुणम् ॥

एतद् बीजं ततो जार्यं क्रमाद्यावच्चतुर्गुणम् ॥६७॥
पूर्ववद् द्रावितं खल्वे मूषायंत्रे च पूर्ववत् ॥
बद्धरागस्तदा सूतो जायते कुंकुमप्रभः ॥६८॥
इत्येवं रंजनं सूते कृत्वा सार्यं त्रिधा क्रमात् ॥
सारितं जारयेन्मूत्रे मूषायंत्रे पुटन्पुटन् ॥६९॥
जारितं सारयेत्पश्चात्सारितं चैव जारयेत् ॥
अनेन क्रमयोगेन सप्तशंखल्लिकाक्रमात् ॥७०॥
ततस्तस्य मुखं बध्वा पूर्ववद् बंधयेच्च तम् ॥
क्रामणेन समायुक्तं कोटिभागेन वेधयेत् ॥
द्रुतं ताम्रं तु तद्दिव्यं भवेत्स्वर्णं न संशयः ॥७१॥

सहस्रवेधी रसः

हिंगुलोत्थितसूतं च भूनागैर्मर्दयेत् त्र्यहम् ॥
तप्तखल्वे ततः पात्यं ऊर्ध्वलग्नं समाहरेत् ॥७२॥
पादांशं जारयेत्तस्य द्वंद्वितं व्योमसत्वकम् ॥
ततोमाक्षिकसत्वं च पादांशं तत्र जारयेत् ॥७३॥
पूर्ववद् द्वंद्वयोगेन मात्रापाकं च पूर्ववत् ॥
महारसैश्चोपरसैर्यत्सत्त्वं पातितं पुरा ॥७४॥
तत्सत्त्वं च पृथक्पादं सूते दत्वा विमर्दयेत् ॥
तप्तखल्वे दिनैकं तु गर्भद्रावणसंयुतम् ॥७५॥
द्रवत्येव ततो जार्यं मूषायंत्रं तु पूर्ववत् ॥
जीर्णे जीर्णे पुनर्देयं प्रतिसत्वं क्रमेण वै ॥७६॥
ततस्तथैव पादांशं गर्भद्रावणबीजकम् ॥
पूर्ववद् द्रावितं जार्यं क्रमेणानेन षड्गुणं ॥७७॥
सारणादि क्रामणांतं तारे वेधं प्रदापयेत् ॥
सहस्रांशेन तत्स्वर्णं भवेज्जांबूनदप्रभम् ॥७८॥

गंधक जारणम्

शाकवृक्षस्य पत्राणां कोमलानां द्रवं हरेत् ॥
द्रवं च ब्रह्मपुष्पाणां विष्णुक्रांताद्रवं तथा ॥७९॥
द्रवैरेभिः शुद्धगंधं भावयेद्दिनसप्तकम् ॥

इष्टिकागर्भमध्ये तु सुशुद्धं पारदं क्षिपेत् ॥८०॥
मुखं स्वच्छेन वस्त्रेण छादयेत्तस्य पृष्ठतः ॥
दशांशं पूर्वगंधं तु दत्वा श्रावेण रोधयेत् ॥८१॥
पृष्ठे लघुपुटं देयं जीर्णे गंधं पुनः क्षिपेत् ॥
तद्वज्जार्यं पुटेनैव पुनर्देयं च गंधकम् ॥८२॥
एवं जार्यं समं गंधं ततो यंत्रात्समुद्धरेत् ॥
अथवा गंधतुल्यं तु जार्यं तेन रसस्य तु ॥८३॥
जारयेत्पूर्वयोगेन काचकूप्यंतरेपि वा ॥८४॥

इति गंधकजारणा

तस्य गंधजीर्णरसस्य जारणायोगेन कोटिवेधीकरणम्

अस्यैव रसराजस्य समांशं व्योमसत्वकम् ॥
द्वंद्वितं पूर्ववज्जार्यं मात्रायुक्तिश्च पूर्ववत् ॥८५॥
ततो रसकसत्वं च जार्यमष्टगुणं रसे ॥
तीक्ष्णशुल्बोरगं चैव क्रमादष्टगुणं रसे ॥८६॥
प्रत्येकं जारयेद्यत्नादभिषिक्तं तु पूर्ववत् ॥
पक्वबीजं ततो जार्यं द्वात्रिंशद्गुणितं क्रमात् ॥८७॥
अथास्य रसराजस्य गर्भद्रावणबीजकम् ॥
तप्तखल्वे समं दत्वा गर्भद्रावकसंयुतम् ॥८८॥
मर्दयेद्दिनमेकं तु गर्भे द्रवति तद् द्रुतम् ॥
मूषायंत्रे ततो जार्यं पूर्ववत्स्वेदनेन वै ॥८९॥
तज्जीर्णे रंजकं बीजं तुल्यं दत्वाथ पूर्ववत् ॥
द्रावयेत् द्रवगर्भे तु तद्वज्जार्यं क्रमेण वै ॥९०॥
यावच्चतुर्गुणं यत्नाद् द्रुतं गर्भेथ जारयेत् ॥
अनेन क्रमयोगेन भवेल्लाक्षानिभो रसः ॥९१॥
ततस्तं पक्वबीजेन सारितं जारयेत् क्रमात् ॥
प्रतिसारणकं कुर्याज्जारयेच्चाथ सारयेत् ॥९२॥
सप्तशृंखलिकायोगान्मुखं बध्वाथ बंधयेत् ॥
क्रामणेन समायुक्तं शुल्वे वेधं प्रदापयेत् ॥९३॥
नागे वा कोटिभागेन दिव्यं भवति कांचनम् ॥९४॥

रसबीजकरणम्

तिंतिणी ब्रह्ममाण्डूकी द्रवैर्वन्ध्याभ्रकं क्रमात् ॥
मर्दयेत् त्रिदिनं चाथ भावयेत् तिंतिणीद्रवैः ॥९५॥
घर्मे दिनत्रयं यावत् शोष्यं पेष्यं पुनः पुनः ॥
मृत्खर्परे शुद्धसूतं क्षिप्त्वा सोष्णं तु कारयेत् ॥९६॥
गंधकं त्रुटिमात्रं तु पूर्वाभ्रं त्रुटिमात्रकम् ॥
दत्वा दत्वा च मृद्वग्नौ पचेत्स्याद्भ्रपिष्टिका ॥९७॥
एकवीरारसैर्भाव्यं गंधं घर्मे त्रिसप्तधा ॥
तं गंधकं स्निग्धभाण्डे द्राव्य मृद्वग्निना क्षिपेत् ॥९८॥
तन्मध्ये पूर्वपिष्टिं तु दोलायंत्रे त्र्यहं पचेत् ॥
षड्गुणं जारयेदेवं गंधकं मृदुवह्निना ॥९९॥
तद्रसं भागमेकं तु पक्वबीजस्य षोडश ॥
भागा सुरंजितस्यैव चूर्णीकृत्वाथ द्वंद्वयेत् ॥१००॥
पूर्ववद् द्वंद्वलिप्तायां मूषायां धमनेन च ॥
रसबीजमिदं ख्यातं चूर्णितं चाभिषेचयेत् ॥१०१॥

रसबीजस्य जारणम्

अथातः शुद्धसूतस्य काचकूप्यां गतस्य च ॥
पूर्ववद् भावितं गंधं जार्यं तस्यैव षड्गुणम् ॥१०२॥
जारयेद्वा तुलायंत्रे गौरीयंत्रक्रमेण वै ॥
तस्यैव रसराजस्य पादांशं रसबीजकम् ॥१०३॥
पूर्ववद् द्रावयेद् गर्भे मूषायंत्रेथ जारयेत् ॥
अनेन क्रमयोगेन द्राव्यं जार्यं पुनः पुनः
द्विरष्टगुणितं यावद् रसबीजं रसस्य वै ॥१०४॥

तेन सहस्रवेधः

भागद्वयं शुद्धतारं भागैकं शुद्धहाटकम् ॥
समावर्त्य तु तत्पत्रं कृत्वा पूर्व रसेन वै ॥१०५॥
लेपयेन्मधुनाक्तेन सहस्रांशेन तत्पुनः ॥
वेष्टयेदर्कजैः पत्रैर्दोलायंत्रे सकांजिके ॥१०६॥
दशाहं पाचितं द्राव्यं दिव्यं भवति कांचनम् ॥१०७॥

॥ इति रसेगंधकजारणपूर्वकसत्वबीजजारणादियोगेन वेधः ॥

समुखेसूते जारणैर्वेधः-कोटिवेधी

सुशुद्धं नागचूर्णं तु पूर्ववच्चाभिषेकितम् ॥
समुखे सूतराजेन्द्रे जारयेद्भ्रसत्ववत् ॥१०८॥
षट्त्रिंशगुणितं यावत्तावज्जार्यं क्रमेण वै ॥
गर्भद्रावणबीजं च पूर्ववद् द्रावितं क्रमात् ॥१०९॥
जारयेत्त्रिगुणं तस्य बीजं यद्रंजकं पुनः ॥
समं जार्यं पुनः जार्यं पक्वबीजेन वै क्रमात् ॥११०॥
सप्तशृंखलिकायोगान्मुखं रुध्वाथ बंधयेत् ॥
क्रामणेन समायुक्तं कोटिवेधी भवेद्रसः ॥१११॥

कोटिवेधी रसः रौप्यकरणम्

नागवज्जारयेद् वंगं षट्त्रिंशगुणितं क्रमात् ॥
पूर्ववद्द्रावितं गर्भं तारबीजं तु जारयेत् ॥११२॥
त्रिगुणं तु भवेद्यावत्ततस्तेनैव सारयेत् ॥
सप्तशृंखलिकायोगान्मुखं बध्वाथ बंधयेत् ॥११३॥
क्रामणेन समायुक्तं ताम्रे वेधं प्रदापयेत् ॥
कोटिभागेन तत्तारं भवेत्कुंदेन्दु सन्निभम् ॥११४॥

कोटिवेधी रसः ( ताम्रे नागे वेधः )

समुखे निर्मुखे वाथ सूतराजे तु जारयेत् ॥
द्वंद्वितं व्योमसत्वं तु यावदष्टगुणं तथा ॥११५॥
ततो रसकसत्वं च जार्यमष्टगुणं तथा ॥
पक्वबीजं समांशं च जारयेदभ्रसत्ववत् ॥११६॥
स्वर्णेन द्वंद्वितं वज्रं समांशेन तु जारयेत् ॥
पूर्ववत्कच्छपे यंत्रे बिडयोगन वै तथा ॥११७॥
गर्भद्रावणबीजं च पादांशं तप्तखल्वके ॥
मर्दयेन्मातुलिंगाम्लैर्गर्भे द्रवति तत्क्षणात् ॥११८॥
गर्भद्रावणयोगं वा दत्वा द्रवति मर्दनात् ॥
मूषायंत्रेण तत्सूतं पचेत्कारीषवह्निना ॥११९॥
जीर्णे बीजं पुनर्द्राव्यं जारयेद् द्रावयेत्पुनः ॥
एवं चतुर्गुणं जार्यं गर्भे द्रावणबीजकम् ॥१२०॥

ततस्तु रंजकं बीजं तद्वज्जार्यं समं क्रमात् ॥
सारणादि क्रामणांतं पूर्ववत्कारयेत्क्रमात् ॥१२१॥
तारे ताम्रे भुजंगे वा कोटिभागेन योजयेत् ॥
करोति कनकं दिव्यं देवाभरणमुत्तमम् ॥१२२॥

धूमवेधी रसः

समुखे सूतराजेन्द्रे जारयेदभ्रसत्ववत् ॥
स्वर्णादिमुण्डपर्यंतं अष्टलोहं पृथक् क्रमात् ॥१२३॥
प्रत्येकमष्टगुणितं अभिषेकं च पूर्ववत् ॥
अभ्रादिसत्वं यत्सर्वं प्रत्येकं त्रिगुणं क्रमात् ॥१२४॥
पृथग्जार्यं कूर्मयंत्रे विडयोगेन पूर्ववत् ॥
ततस्तु पादपादांशं गर्भद्रावणबीजकम् ॥१२५॥
पूर्ववद्द्रावितं जार्यं त्रिगुणं तु यदा भवेत् ॥
ततस्तु पक्वबीजेन सारयेज्जारयेत्त्रिधा ॥१२६॥
इत्येवं सप्तधा कुर्यान्मुखं बध्वाथ बंधयेत्
धूमावलोकवेधी स्यात्ताम्रं भवति कांचनम् ॥१२७॥

एवं चारणजारणं बहुविधं कृत्वा रसे संक्रमं
गर्भे द्रावणबीजकं च विधिना गर्भे द्रुतं कारयेत् ॥
जीर्णे रंजनसारणामुखमथो बध्वाथ बध्वा रसं
कुर्यात्कांचनमभ्रमेरुसदृशं दानाय भोगाय वै ॥१२८॥

इतिश्री पार्वतीपुत्र नित्यनाथसिद्ध विरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके जारणादिगर्भद्रावणं नाम पंचदशोपदेशः १५ ॥

---

## ॥ अथ श्री वादिखंडे षोडशोपदेशः १६ ॥

यासां छेदेन रक्तं प्रवहति सततं प्रायशो रक्तभूमौ ।
संग्राह्या भूलतास्ताः विषहरघनदं पातयेत्तेषु सत्त्वम् ॥
तद्युक्त्या पारदेन्द्रे चरति यदि समं सारणाकर्मयोगै-
र्बद्धोयं कोटिवेधी समरविरजते योजयेद् भास्करे वा ॥१॥

भूनाग सत्वम् १

भूलता कांतपाषाणं चूर्णं कृत्वा समं समम् ॥
तत्सत्वमभ्रवद् ग्राह्यं तत्रत्यैरौषधैः सह ॥२॥

भूनाग सत्वम् २

सौवीरं कांतपाषाणं तीक्ष्णं पाषाणचूर्णकम् ॥
एतेषां तुल्यभूनागचूर्णमेकत्र कल्पयेत् ॥३॥
अभ्रवद् ग्राहयेत्सत्वं तत्रत्यैरौषधैर्धमन् ॥४॥

भूनागसत्वम् ३

कांतपाषाण सौवीरचूर्णं स्याद्भूलतासमम् ॥
अभ्रवद्ग्राहयेत्सत्वं रसराजस्य बंधकम् ॥५॥

भूनागसत्वम् ४

सौवीर कांततीक्ष्णानां चूर्णं भूनागमृत्समम् ॥
धार्यं भाण्डे क्षिपेत्तस्मिन् सजीवा भूलता पुनः ॥६॥
उदकैः सेचयेन्नित्यं यावत्तद्भक्षयंति वै ॥
तत्सत्वं अभ्रवत्पिडं बध्वा सत्वं समाहरेत् ॥७॥

भूनागसत्वम् ५

कांतपाषाणचूर्णं तु भूलताचूर्णसंयुतम् ॥
अजामूत्रैस्त्रिसप्ताहं भावयेदातपे खरे ॥
तत्पिंडं धारयेत्कोष्ठ्यां सत्वं ग्राह्यं सुशोभनम् ॥८॥

भूनागसत्वम् ६

गोमूत्रं रजनी राजी लवणं कल्कयेत्समम् ॥
तेन सिंच्यात्तु भूनागं खरे घर्मे द्रवत्यलम् ॥९॥
कंकुष्ठं तद्द्रवं तुल्यं कृत्वा सत्वं समाहरेत् ॥
व्योमवत्क्रमयोगेन रसबंधकरं भवेत् ॥१०॥

भूनागसत्वम् ७

गंधकं रसकं चूर्ण्यं भूलताचूर्णतुल्यकम् ॥
वज्रमूषांधितं ध्मातं सत्वं भवति शोभनम् ॥११॥
एतत्सत्वं विचूर्ण्याथ पूर्वतच्चाभिषेकितम् ॥१२॥

॥ इति भूनागसत्वपातनविधिः ॥

भूनागतैलम्

दिनं भूनागसंतुल्यं मर्द्य सौवीरमंजनम् ॥
पंचमाहिषसंमिश्रं कृत्वाथ वटकीकृतम् ॥
तस्मात्पातालयंत्रेण तैलं ग्राह्यं पुटेन वै ॥१३॥

भूनागतैलम्

भूलतास्तु गवां मूत्रैः क्षालयेत्ताभिराहरेत् ॥
तैलं पातालयंत्रेण तत्तैलं जारणे हितम् ॥१४॥

गुह्यसूतः ( अस्य जारणेन कोटिवेधः भवति

तप्तखल्वे शुद्धसूतं जीवद्भूनागसंयुतम् ॥
त्रिदिनं मर्दयेद्गाढं तत्समस्तं समुद्धृतम् ॥१५॥
भूनागचूर्णयुक्तायां मूषायां सन्निवेशयेत्
तदूर्ध्वं भूलताचूर्णं दत्वा रुध्वाथ शोषयेत् ॥१६॥
गर्तान्तर्गोमयं सार्धं क्षिप्त्वा मूषां निवेशयेत् ॥
पादमात्रं तु तां गर्भे करीषं तुषवह्निना ॥१७॥
पुटे पच्याद्दिनैकं तु समुद्धृत्याथ दापयेत् ॥
ऊर्ध्वाधो भूलताचूर्णं दत्वा तद्वत्पुटे पचेत् ॥१८॥
मासमात्रमिदं कुर्याद्भवेदग्निसहो रसः ॥
जायते मूर्तिबद्धस्य राक्षसो वडवामुखं ॥१९॥
ग्रसते सर्वलोहानि सत्वानि विविधानि च ॥
वज्रादि सर्वलोहानि दत्तानि च मृतामि च ॥
गुह्यसूतमिदं ख्यातं वक्ष्यते चास्य जारणाम् ॥२०॥

गुह्यसूतजारणम्

अस्यैव षोडशांशेन दत्वा भूनागसत्वकम् ॥
तप्तखल्वे दिनं मर्द्य ततः सिद्धबिडान्वितम् ॥२१॥
भूनागतैललिप्तायां मूषायां तन्निवेशयेत् ॥
रुध्वा स्वेद्यं करीषाग्नौ जीर्णसत्वं च पूर्ववत् ॥२२॥
दत्वा मर्द्य तप्तखल्वे विडं देयं दशांशतः ॥
पूर्ववल्लिप्तमूषायां जारयेत्स्वेदनेन वै ॥२३॥
एवं सत्वं समं जार्यं पूर्ववत्कच्छपेन वा ॥

गर्भद्रावेण बीजं च पूर्ववत् षड्गुणं शनैः ॥२४॥
जारयेद् द्रावितं गर्तं मूषायंत्रे तु पूर्ववत् ॥
ततस्तु रंजकं बीजं जार्यमस्यैव षड्गुणम् ॥२५॥
ततस्तु पक्वबीजेन सप्तशृंखलिकाक्रमात् ॥
सारणं जारणं कुर्यान्मुखं बध्वा तु बंधयेत् ॥२६॥
अनेन कोटिभागेन चंद्रार्कं कांचनं भवेत् ॥ ॥२७॥

गुह्यसूतजारणेन कोटिवेधः

गुह्यसूतं सुवर्णं च तुल्यमम्लेन मर्दयेत् ॥
यावद् गोलं तु तं कृत्वा सारणायां तु मध्यतः ॥२८॥
द्वयोस्तुल्यं तु भूनागसत्वं मूषागतं द्रुतं ॥
तस्मिन् सत्वे तु तं ढाल्यं सर्वं खोटं भवेत्तु तत् ॥२९॥
भूनागतैललिप्तायां मूषायां चांधितं पुटेत् ॥
यावत्सूतावशेषं स्यात्तावल्लघुपुटैः पचेत् ॥३०॥
एवं पुनः पुनः कुर्यात् लिप्त्वा मूषागतं पुटम् ॥
अथवा बिडलिप्तायां मूषायां चांधितं पुटेत् ॥३१॥
यावत्सूतावशेषं स्यात्तावल्लघुपुटैः पचेत् ॥
गर्भद्रावणबीजं च समं तस्यैव सारयेत् ॥३२॥
सारणायंत्रमध्ये तु पूर्ववज्जारयेत्ततः ॥
ततो व्योमादिसत्वानि तुल्यतुल्यानि तस्य वै ॥३३॥
मारितानि पृथग्भूयो जारितानि च कारयेत् ॥
ततस्तु रंजकं बीजं सारितं तस्य जारयेत् ॥३४॥
चतुर्गुणं यथापूर्वं लिप्तमूषागतं पुटेत् ॥
तत्सार्यं पक्वबीजेन यथापूर्वं क्रमेण वै ॥३५॥
सप्तशृंखलिकायोगान्मुखं बध्वाथ बंधयेत् ॥
कोटिभागेन तेनैव ताम्रं भवति कांचनम् ॥३६॥

गुह्यसूतेन शतवेधी रसः

भूनागसत्वसंतुल्यं गुह्यसूतं तु मर्दयेत् ॥
दिव्यौषधीद्रवैर्मर्द्यं तप्तखल्वे दिनत्रयम् ॥३७॥
तत्सर्वं वज्रमूषायां रुध्वा संधिं विशोषयेत् ॥

कारीषाग्नौ दिवारात्रौ त्रिशतं वा तुषाग्निना ॥३८॥
स्वेदयेन्मृदुपाकेन समुद्धृत्याथ मर्दयेत् ॥
दिव्यौषधीद्रवैरेव तप्तखल्वे दिनावधि ॥३९॥
ततो रुध्वा धमेद् गाढं खोटं भवति तद्रसः ॥
गुह्यसूतं पुनस्तुल्यं दत्वा तस्मिन्दिनत्रयम् ॥४०॥
मर्दयेत्स्वेदयेत्तद्वत् कुर्याद् बंधं च पूर्ववत् ॥
तुल्येन कांजिकेनैव सारयेच्चाथ तेन वै ॥
वेधयेच्छतभागेन चंद्रार्कं कांचनं भवेत् ॥४१॥

॥ इति भूनागसत्वगुह्यसूताभ्यां हेमकरणम् ॥

अथ रक्तवैक्रांतयोगेन सस्वर्णेन जारितरसस्य अयुतवेधित्वम्

रक्तवर्णं तु वैक्रांतं सुशुद्धं पलमात्रकम् ॥
व्याघ्रीकंदोदरे पच्याद् दोलायां हयमूत्रकैः ॥४२॥
अर्धयामात्समुद्धृत्य व्याघ्रीकंदद्रवैः पुनः ॥
भावयेत्सप्तधा घर्मे पश्चात्तत्समकांचने ॥४३॥
शुद्धसूतं पलैकं तु त्रयमेकत्र मर्दयेत् ॥
व्याघ्रीकंदद्रवैश्चाश्वमूत्रैर्यामचतुष्टयम् ॥४४॥
तद्गोलं हंडिकायंत्रे यामं लघ्वग्निना पचेत् ॥
उद्धृत्य मर्दयेद्यामं पूर्वद्रावैः समूत्रकैः ॥४५॥
शतं पलं स्वर्णपत्रे अनेनैव तु लेपयेत् ॥
रुध्वा लघुपुटैः पच्याद्विंशद्वारं पुनः पुनः ॥४६॥
व्याघ्राकंदद्रवैश्चाश्वमूत्रैश्चैव तु मर्दयेत् ॥
एतत्स्वर्णं साभिषिक्तं सत्ववत्सम्मुखे रसे ॥४७॥
चारयेज्जारयेदेवं यावच्छतगुणं शनैः ॥
तद्रसं चाश्वमूत्रेण व्याघ्रीकंदद्रवेण च ॥४८॥
बीजैर्दिव्यौषधीनां च तप्तखल्वे विमर्दयेत् ॥
त्रिदिनांते समुद्धृत्य वज्रमूषाधितं पुटेत् ॥४९॥
दिवारात्रौ करीषाग्नौ त्रिरात्रं च तुषाग्निना ॥
एवं पुनः पुनः कुर्यान्मर्दनं पुटपाचनम् ॥५०॥
सप्तधा तत्प्रयत्नेन तद्रसो म्रियते ध्रुवम् ॥

अनेनैवायुतांशेन क्रामणांतेन वेधयेत् ॥५१॥
चंद्रार्कं वा द्रुतं ताम्रं नागं वा कांचनं भवेत् ॥
चारितं पूर्वसूतं यन्मारणेन विना तु तत् ॥५२॥
मारयेत्पक्वबीजानि त्रिधा तं जारयेत्क्रमात् ॥
पूर्ववद्बंधनत्वं च कृत्वा तं क्रामणेन वै ॥५३॥
योजयेल्लक्षभागेन चंद्रार्कं द्राविते तु तम् ॥
स्वर्णं भवति रूपाढ्यं शंभुना परिकीर्तितम् ॥५४॥

पीतवैक्रांतयोगेन सस्वर्णेन कोटिवेधी रसः

पीतवर्णं तु वैक्रांतं शुद्धं भाव्यं दिनावधि ॥
व्याघ्रीद्रवाश्वमूत्राभ्यां व्याघ्रीकंदगतं पचेत् ॥५५॥
दोलायंत्रे दिवारात्रं समुद्धृत्याथ चूर्णयेत् ॥
एतच्चूर्णं पलैकं तु सूते दशगुणे क्षिपेत् ॥५६॥
व्याघ्रीकंदद्रवैश्चाश्वमूत्रैर्मर्द्यं दिनावधि ॥
अनेन लेपयेत्स्वर्णपत्रं शतपलं पुनः ॥५७॥
वज्रमूषागतं रुध्वा त्रिदिनं तुषवह्निना ॥
स्वेदयेद्वा दिवारात्रौ कारीषाग्नावथोद्धरेत् ॥५८॥
व्याघ्रीकंदाश्वमूत्राभ्यां मर्द्यं तद्वत्पुटे पचेत् ॥
एवं शतपुटैः पक्वं अभिषिक्तं च कारयेत् ॥५९॥
समुखे रसराजेन्द्रे चार्यमेतच्च जारयेत् ॥
व्योमसत्वक्रमेणैव यावत् शतगुणं शनैः ॥६०॥
मूषायंत्रेथवा जार्यं यथापूर्वं क्रमेण वै ॥
तत्रस्थस्य रसेन्द्रस्य गर्भद्रावणबीजकम् ॥६१॥
पूर्ववद् द्रावितं गर्तं क्रमाज्जार्यं चतुर्गुणम् ॥
तत्रस्थं पक्वबीजेन जारयेत्सप्तशंखलैः ॥६२॥
मुखं बध्वा रसं बध्वा कोटिवेधी भवेद् रसः ॥६३॥

कृष्णवैक्रांतजारणेन ससुवर्णेन शतवेधिरसः–तारकरणं

कृष्णवर्णं तु वैक्रांतं व्याघ्रीकंदोदरे क्षिपेत् ॥
अश्वमूत्रैर्दिनं स्वेद्यं तद्भागैकं विचूर्णयेत् ॥६४॥
शुद्धसूतस्य भागैकं तप्तखल्वे दिनावधि

व्याघ्रीकंदद्रवैश्चाश्वमूत्रैश्चैव तु मर्दयेत् ॥६५॥
तारं दत्वा षडंशेन पुनस्तद्वच्च मर्दयेत् ॥
सर्वतुल्यं पुनः सूतं दत्वा तत्रैव मर्दयेत् ॥६६॥
जातं गोलं समुद्धृत्य निगलेन तु लेपयेत् ॥
वज्रमूषागतं रुध्वा त्रिदिनं तुषवह्निना ॥६७॥
स्वेदयेद्वा दिवारात्रौ निर्वाते करिषाग्निना ॥
उद्धृत्य मर्दयेच्चाथ बीजैर्दिव्यौषधीद्रवैः ॥६८॥
त्रिदिनं तप्तखल्वे तु हयमूत्रेण संयुतम् ॥
पूर्ववल्लेपितं रुध्वा तद्वत्पाच्यं पुटेन वै ॥६९॥
अनेन क्रमयोगेन सप्तधा पाचयेत्पुटैः ॥
अनेन वेधयेत्ताम्रं द्रावितं शतमांशतः ॥
पूर्ववत् क्रामणं दत्वा तारं भवति शोभनम् ॥७०॥

श्वेत वैक्रांतयोगेन तारकरणम्-लक्षवेधी रसः

श्वेतवर्णं तु वैक्रांतं सुशुद्धं पूर्ववत् क्रमात् ॥
रक्तवैक्रांतयोगेन तारं तेनैव मारयेत् ॥७१॥
तत्तारं जारयेत् सूते तद्वच्छतगुणैः शनैः ॥
तद्वन्मार्यं पुटेनैव भवेदयुतवेधकः ॥७२॥
तद्वत् वै तारबीजेन सारितं जारयेत्क्रमात् ॥
मुखं बध्वा रसं बध्वा लक्षवेधी भवेद्रसः ॥७३॥
द्रुते ताम्रे प्रदातव्यं तत्तारं जायते शुभम् ॥७४॥

ताम्रवर्णवैक्रांतयोगेन स्वर्णकरणम् लक्षवेधी रसः

ताम्रवर्णं तु वैक्रांतं शुद्धहिंगुलसंयुतम् ॥
मर्दयेदम्लवर्गेण तप्तखल्वे दिनत्रयम् ॥७५॥
अनेन स्वर्णपत्राणि प्रलिप्तानि पुटे पचेत् ॥
समुद्धृत्य पुनर्मर्द्यमम्लवर्गेण संयुतम् ॥७६॥
पचेत्सप्तपुटैरेवं तद्भस्म पलमात्रकम् ॥
शुद्धसूतपलैकं तु दिव्यौषधीद्रवैस्त्र्यहम् ॥७७॥
मर्दितं कारयेद् गोलं निर्मलेन च लेपयेत् ॥
रुध्वा दिनत्रयं स्वेद्यं करीषतुषवह्निना ॥७८॥

ततो दिव्यौषधीद्रावैर्मर्दितं निगलेन च ॥
रुध्वा लिप्त्वा धमेद् गाढं बंधमायाति निश्चितम् ॥७९॥
अनेन शतमांशेन तारं भवति कांचनम् ॥८०॥

रक्त वैक्रांतयोगेन सहस्रवेधी रसः

रक्तवैक्रांतसत्वं तु सहहेम्ना तु चूर्णयेत् ॥
द्वंद्वमेलापलिप्तायां मूषायां चांधितं धमेत् ॥८१॥
तत्खोटं वाभिषिक्तं तु सम्मुखे जारयेद्रसे ॥
अभ्रसत्वप्रकारेण जारयेत्पारदं समम् ॥८२॥
तद्रसं पक्वबीजेन सारयेत्पूर्ववत्त्रिधा ॥
तद्वच्च जारणा कार्या मुखं बध्वाथ बंधयेत् ॥८३॥
सहस्रांशेन तेनैव तारं भवति कांचनम् ॥८४॥

रक्तवैक्रांतयोगेन सहस्रवेधी रसः

रक्तवैक्रांतसत्वं च शुद्धसूतं समं समम् ॥
मर्द्यं दिव्यौषधीद्रावैस्तप्तखल्वे दिनत्रयम् ॥८५॥
ततो निगललिप्तायां मूषायां चांधितं पुटेत् ॥
करीषाग्नौ दिवारात्रौ त्रिदिनं च तुषाग्निना ॥८६॥
समुद्धृत्य पुनर्लेप्यं तद्गोलं निगलेन च ॥
मूषांते लवणं दत्वा रुध्वा संधिं विशोषयेत् ॥८७॥
पुनश्च लवणं दत्वा रुध्वा संधिं विशोषयेत् ॥
लेपयेत् शंखचूर्णेन तां मूषां सर्वतोंगुलम् ॥
कोष्ठीयंत्रे हठाद् धाम्यं बद्धो भवति तद्रसः ॥८८॥
तारे ताम्रे भुजंगे वा सहस्रांशेन वेधयेत् ॥
जायते कनकं दिव्यं देवाभरणमुत्तमम् ॥८९॥

चपलाभेदाः

रक्ता पीता सिता कृष्णा चपला तु चतुर्विधा ॥
वैक्रांतस्य प्रकारेण शोध्याः स्यू रसबंधकाः ॥९०॥

चपलायोगेन वेधः

लांगली करवीराग्नि गिरिकर्णी च टंकणम् ॥
सौवीरांजनतुल्यांशं नारीस्तन्येन पेषयेत् ॥९१॥
वज्रमूषोदरं तेन लेपयेत्सर्वतोंगुलम् ॥

चपला रक्तपीता वा भागमेकं विचूर्णयेत् ॥९२॥
सुवर्णभागाश्चत्वारो द्विभागं शुद्धपारदम् ॥
दिव्यौषधीद्रवैर्मर्द्यं सर्वमेतद्दिनत्रयम् ॥९३॥
पूर्वमूषां निरुध्याथ छायाशुष्कं धमेद्धठात् ॥
तत्सर्वं जायते खोटं शतांशेन तु तेन वै ॥९४॥
सुशुद्धं वेधयेन्नागं भवेद् गुंजानिभं तु तत् ॥
नागेनानेन शुल्वं तु शतांशेनैव वेधयेत् ॥९५॥
अरुणाभं भवेच्छुल्वं तेन शुल्वेन वेधयेत् ॥
शुद्धतारं शतांशेन तत्तारं कांचनं भवेत् ॥९६॥
तद्वच्च जारणा कार्या मुखं बद्ध्वाथ वेधयेत् ॥
सहस्रांशेन तेनैव तारं भवति कांचनम् ॥९७॥
सुशुद्धं वेधयेन्नागं भवेद्गुंजानिभं च तत् ॥
नागेनानेन शुल्वं तु शतांशेनैव वेधयेत् ) ॥९८॥

चपलायोगेन शतवेधी रसः

षड्भागं चपलाचूर्णं तारं स्यात्सप्तभागकम् ॥
भागाष्टकं सुवर्णं च नवभागं च पारदम् ॥९९॥
सर्वं दिव्यौषधीद्रावैर्मर्दयेद्दिवसत्रयम् ॥
तद्गोलं निगलेनैव सर्वतो लेपयेद् घनम् ॥१००॥
लांगली करवीराग्नि ग्रध्रविष्ठा समं समम् ॥
पेषयेन्मातुलिंगाम्लैस्तेन मूषां प्रलेपयेत् ॥१०१॥
तद्रुध्वा पूर्ववद्गोलं धमेत्खोटं भवेत्तु तत् ॥
तेनैव तु शतांशेन नागेवेधं प्रदापयेत् ॥१०२॥
तेन नागेन शुल्वं च शतांशेनैव वेधयेत् ॥
ताम्रेण वेधयेत्तारं पूर्ववत्कांचनं भवेत् ॥१०३॥

चतुःषष्ठिवेधी रसः

पलैकं शुद्धसूतं च काचपात्रे विनिक्षिपेत् ॥
पूर्ववज्जारितं गंधं क्षिपेत्तस्मिन्पलत्रयम् ॥१०४॥
जंबीराणां द्रवं दत्वा गंधतुल्यं शनैः पचेत् ॥
वालुकाभाण्डमध्ये तु यावज्जीर्यति गंधकम् ॥१०५॥

पूर्वसंस्कृतधान्याभ्रं पलमेकं च तत्र वै ॥
क्षिप्त्वा जंबीरनीरं च बिडं दत्वाथ पाचयेत् ॥१०६॥
जीर्णे यावद् भवेत्तत्तु ह्यम्लं तावत्क्षिपन्पचेत् ॥
तस्मिन्स्वर्णं पलैकं तु चूर्णितं चाभिषेकितम् ॥१०७॥
क्षिपेत्तस्मिन्बिडं चाथ देयं जंबीरसंयुतम् ॥
पचेज्जीर्णं भवेद्यावत्तत्रैव मृदुवह्निना ॥१०८॥
बिडमम्लं क्षिपन्नेत्र जीर्णे चोद्धृत्य मर्दयेत् ॥
त्रिदिनं तप्तखल्वे तु दिव्यौषधीद्रवैर्युतम् ॥१०९॥
मूलमीश्वरलिंग्युत्थं शिग्रुमूलं च पेषयेत् ॥
वज्रमूषामनेनैव लिप्त्वा पूर्वरसं क्षिपेत् ॥११०॥
रुध्वा स्वेद्यं करीषाग्नावहोरात्रात्समुद्धरेत् ॥
पूर्ववन्मर्दितं रुध्वा धमेद् बद्धो भवेद्रसः ॥१११॥
चतुःषष्ठितमांशेन दत्ते तारमनेन वै ॥
वेधयेज्जारयेद् दिव्यं कांचनं सिद्धसंमतम् ॥११२॥

गंधकजारणाक्रमेण वेधः

शतनिष्कं शुद्धसूतं दशनिष्कं तु गंधकम् ॥
क्षणं कन्याद्रवैर्मर्द्य पातनायंत्रगं पचेत् ॥११३॥
ऊर्ध्वलग्नं समादाय गंधकं दशनिष्ककम् ॥
दत्वा मर्द्य पुनस्तद्वद्यंत्रे पच्यात् समुद्धरेत् ॥११४॥
एवं पुनः पुनः कुर्यादेकविंशतिवारकम् ॥
गौरीयंत्रे तु तत्सूतं क्षिप्त्वा देयं तु गंधकम् ॥११५॥
भावितं पूर्वयोगेन विंशत्यंशेन चूर्णितम् ॥
रुध्वा लघुपुटे पच्याज्जीर्णे गंधं प्रदापयेत् ॥११६॥
एवं पुनः पुनर्जार्यं यथाशक्तिक्रमेण वै ॥
जीर्णे शतगुणे गंधे शतवेधी भवेद्रसः ॥११७॥
सहस्रगुणिते जीर्णे सहस्रांशेन वेधयेत् ॥
लक्षजीर्णे लक्षवेधी कोटिवेधी भवेद्रसः ॥११८॥
जीर्णे कोटिगुणे गंधेप्येवं स्यादुत्तरोत्तरम् ॥
सारयेत्पक्वबीजेन पूर्ववज्जारयेत्क्रमात् ॥११९॥

मुखं बध्वा रसं बध्वा तारे वेधं प्रदापयेत् ॥
जायते कनकं दिव्यं देवाभरणभूषणम् ॥१२०॥

॥ इति गंधकजारणवेधः ॥

भूसत्वकैः परमगुह्यतमैः ससूतैर्वैक्रांतकैः सचपलै रसगंधकैश्च ॥
दृष्ट्वानुभूय सकलं सुखसाध्ययोगैः सम्यक् सुवर्णकरणं गदितं सुधीनाम् ॥१२१॥

इतिश्री पार्वतीपुत्र नित्यनाथसिद्ध विरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके भूनागसत्वादि सिद्धयोगैः स्वर्णकरणं नाम षोडशोपदेशः १६ ॥

---

# ॥ अथ श्री वादिखंडे सप्तदशोपदेशः १७ ॥

वज्राभ्रसत्ववरहाटकलोहजालं
कुर्याद् द्रुतं द्रवभवं किलबंधयोग्यम् ॥
नानाविधैः सुगमसंस्कृतयोगराजै-
स्तद्वक्ष्यते परमसिद्धिकरं नराणाम् ॥१॥

अभ्रकद्रुतिः १

शुद्धकृष्णाभ्रपत्राणि पीलुतैलेन लेपयेत् ॥
घर्मे शोष्याणि सप्ताहं लिप्त्वा लिप्त्वा पुनः पुनः ॥२॥
त्रिदिनं चाम्लवर्गेण तद्वच्छोष्याणि चाथ वै ॥
स्नुह्यर्कार्जुनवज्रीणां कटुतुंब्या समाहरेत् ॥३॥
क्षारं क्षारत्रयं चैतदष्टकं चूर्णितं समम् ॥
वज्रकंदं क्षीरकंदं बृहती कंटकारिका ॥४॥
वनवृंताक एतेषां द्रवैर्भाव्यं दिनत्रयम् ॥
अनेन क्षारकल्केन पूर्वपत्राणि लेपयेत् ॥५॥
आतपे कांस्यपात्रे तु स्थाप्यं लेप्यं पुनः पुनः ॥
एवं दिनत्रयं कुर्याद् द्रुतिर्भवति निर्मला ॥६॥

अभ्रकद्रुतिः २

अम्लवर्गेण पत्राणि क्षिपेद् घर्मे दिनत्रयम् ।
तथान्यान्यभ्रपत्राणि क्षालयेत् क्षीरकंदकैः ॥७॥

क्षारैर्यावद् भवेत्कल्कस्तत्कल्कैः पूर्वपत्रकम् ॥
लिप्त्वा लिप्त्वा क्षिपेद् घर्मे कांस्यपात्रे विशोषयेत् ॥८॥
सप्ताहान्नात्र संदेहो रसरूपा द्रुतिर्भवेत् ॥९॥

अभ्रकद्रुतिः ३

काकांडाफलचूर्णं तु मित्रपंचकसंयुतम् ॥
एतत्तुल्यं च धान्याभ्रमम्लैर्मर्द्य दिनावधि ॥
अंधमूषागतं ध्मातं द्रुतिर्भवति निर्मला ॥१०॥

अभ्रकद्रुतिः ४

धान्याभ्रकं सगोमांसमभ्रपादं च सैंधवम् ॥
स्नुह्यर्कपयसा द्रावैर्मुनिभिर्मर्दयेत् त्र्यहम् ॥११॥
तद्गोलं कदलीकंदे क्षिप्त्वा बाह्ये मृदा लिपेत् ॥
करीषाग्नौ त्र्यहं पच्याद् द्रुतिर्भवति निर्मला ॥१२॥

अभ्रकद्रुतिः ५

अगस्त्यपत्रनिर्यासैर्मर्द्यं धान्याभ्रकं दिनम् ॥
तद्गोलं निक्षिपेत् कंदे सूरणोत्थे निरुध्य च ॥१३॥
तत्कंदं निखनेद् गोष्ठभूमौ मासात्समुद्धरेत् ॥
कंदोदराद् द्रुतिर्ग्राह्या सूततुल्या तु निर्मला ॥१४॥

अभ्रकद्रुतिः ६

धान्याभ्रकं दिनं मर्द्यमजमार्या द्रवैर्दिनम् ॥
स्थापयेन्मृण्मये पात्रे त्र्यहाद् घर्मे भवत्यलम् ॥१५॥

अभ्रकद्रुतिः ७

सप्ताहं मुनितोयेन धान्याभ्रं सैंधवं शिला ॥
मर्दयेद्भावयेद् घर्मे ततो दार्वी सुवर्चलम् ॥१६॥
मरिचं अभ्रपादांशं मूर्वापत्ररसैर्दिनम् ॥
मर्दयेद्वज्रकंदुत्थैर्द्रवैर्भाव्यं दिनावधि ॥१७॥
शरावसंपुटे तं तु रुध्वा ध्माते द्रुतिर्भवेत् ॥१८॥

अभ्रकद्रुतिः ८

धान्याभ्रकं मयोक्तव्यं काकिनीबीजतुल्यकम् ॥
स्नुहीक्षीरेण सप्ताहं घर्मे ताप्यं द्रुतिर्भवेत् ॥१९॥

अभ्रकद्रुतिः ९

वज्रवल्लीद्रवैर्मर्द्यं धान्याभ्रं ससुवर्चलम् ॥
तुल्यं त्रिदिनपर्यंतं ततस्तं स्रावसंपुटे ॥२०॥
रुध्वा ध्माते द्रवत्येव रसरूपं न संशयः ॥
इत्येवं रसरूपं च जायते नैव संशयः ॥२१॥

अभ्रकद्रुतिः १०

उदुंबरोद्भवैः क्षीरैरभ्रपत्राणि पाचयेत् ॥
स्थाल्यां वा पाचयेदेतान् भवंति नवनीतवत् ॥२२॥
ततस्तं वटकं कृत्वा छिद्रमूषां निरुध्य च ॥
यामत्रयं धमेद् गाढं अधोभाण्डे द्रुतिः पतेत् ॥२३॥

अभ्रकद्रुतिः ११

काकोदुंबरिजैः क्षीरैर्मर्द्यं धान्याभ्रकं दिनम् ॥
वनमूषकबीजानि त्वग्वर्ज्यान्यभ्रकैः समम् ॥२४॥
मर्दयित्वार्धयामं तं द्राव्यं पातालयंत्रकैः ॥
अहोरात्रं पुटं देयं द्रुतिर्भवति निर्मला ॥२५॥

अभ्रकद्रुतिः १२

कपितिंदुजातफलैः समं धान्याभ्रकं दृढम् ॥
मर्दयेद्दिनमेकं तु काचकूप्यां निवेशयेत् ॥२६॥
नरकेशैर्मुखं रुध्वा कूपिकां लेपयेन्मृदा ॥
पुटेत्पातालयंत्रेण दिनांते द्रुतिमाप्नुयात् ॥२७॥

अभ्रकद्रुतिः १३

धान्याभ्रकसमांशेन चूर्णं गुंजाफलस्य तु ॥
स्नुहीक्षीरेण सप्ताहं भावितं धमनाद् भवेत् ॥२८॥

अभ्रकद्रुतिः १४

रक्तोत्पलस्य नीलोत्थद्रवैर्मर्द्यं दिनत्रयम् ॥
धान्याभ्रकं धमेद्रुध्वा वज्रमूषागतं धमेत् ॥२९॥
वेगीफलस्य चूर्णेन तुल्यं धान्याभ्रकं त्र्यहम् ॥
भाव्यं घर्मे स्नुहीक्षीरैर्ध्मातं संपुटगं द्रवेत् ॥३०॥

अभ्रकसत्वद्रुतिः १

अथवा छागमूत्रेण भावयेत्कपितिंदुजम् ॥

फलचूर्णं तु तच्छुष्कं द्रुते सत्वे प्रवापयेत् ॥३१॥
द्वित्रिवारप्रयोगेण द्रुतिर्भवति निर्मला ॥३२॥

अभ्रकसत्वद्रुतिः २

नरकेशोद्भवैस्तैलैः सेचयेदभ्रसत्वकम् ॥
तद्गोलं गोमयैर्लिप्त्वा वज्रमूषांतरे क्षिपेत् ॥
हठाद् ध्माते द्रवत्येव तिष्ठते रसराजवत् ॥३३॥

अभ्रकसत्वद्रुतिः ३

भावयेन्नरमूत्रेण क्षीरकंदस्य चूर्णकम् ॥
दशवारं प्रयत्नेन शोष्यं पेष्यं पुनः पुनः ॥३४॥
तेनावापं द्रुते सत्वे दत्वा दत्वा च संधमेत् ॥
यावत्तद्द्रवतां याति तावद्देयं पुनः पुनः ॥
लोहं च द्रवते तेन हठाद् ध्माते न संशयः ॥३५॥

अभ्रकसत्वद्रुतिः ४

पंचांगं देवदाल्युत्थं चूर्णं भाव्यं च तद्द्रवैः ॥
शोष्यं पेष्यं पुनर्भाव्यं शतवारं प्रयत्नतः ॥३६॥
तच्चूर्णं दशमांशेन द्रुते सत्वे प्रतापयेत् ॥
तत्पुनर्जायते बद्धो वापो देयः पुनः पुनः ॥३७॥

अभ्रकसत्वद्रुतिः ५

क्षीरकंदद्रवैर्भाव्यं शतधा क्षीरकंदकम् ॥
तद्वापेन द्रवेत्सत्वं लोहानि सकलानि च ॥३८॥

अभ्रकसत्वद्रुतिः ६

सर्वं धान्याम्लसंधानै र्भाव्यमभ्रकसत्वकम् ॥
निचुलक्षारसंयुक्तं ध्मातं तिष्ठति सूतवत् ॥३९॥

सुवर्णद्रुतिः १

इंद्रगोपकचूर्णं तु देवदालीफलद्रवैः ॥
भावितं चैकविंशाहाद् द्रुते हेम्नि प्रवापयेत् ॥४०॥
किंचित्किंचित्समं यावत् तावत्तिष्ठति सूतवत् ॥४१॥

सुवर्ण-रौप्यद्रुतिः २

शतधा नरमूत्रेण भावयेद्देवदालिकाम् ॥
तच्चूर्णं वापमात्रेण द्रुतिः स्यात्स्वर्णतारयोः ॥४२॥

तीक्ष्णलोहद्रुतिः १

सुरदालीभवं भस्म नरमूत्रेण भावितम् ॥
त्रिसप्तवारं तं क्षारं वापे तीक्ष्णद्रुतिर्भवेत् ॥४३॥

तीक्ष्णलोहद्रुतिः २

मेषशृंगी सकूर्मास्थि शिलाजतुनि वापयेत् ॥
सारं द्रुतिर्भवेत्सत्यं आवर्त्यादौ प्रदापयेत् ॥४४॥

सर्वधातुद्रुतिः १

गंधकं कांतपाषाणं चूर्णयित्वा समं समम् ॥
द्रुते लोहे प्रतीवापो देयो लोहाष्टकं द्रवेत् ॥४५॥

सर्वधातुद्रुतिः २

देवदाल्या द्रवैर्भाव्यं गंधकं दिनसप्तकम् ॥
तेन प्रवापमात्रेण लोहं तिष्ठति सूतवत् ॥४६॥

सुवर्णद्रुतिः ३

अतिस्थूलस्य भेकस्य निवार्यांत्राणि निक्षिपेत् ॥
उदरे टंकणं पूर्णं तद्रक्षेद्ब्रांडमध्यगम् ॥४७॥
अष्टाहाद्ग्राहयेत्तस्मात्तैलं पातालयंत्रके ॥
तत्तैलं द्राविते स्वर्णे क्षिपेद् द्रुतिभवाप्नुयात् ॥४८॥

सुवर्णद्रुतिः ४

इंद्रगोपोश्वलाला च शशमण्डूकयोर्वसा ॥
अस्थीनि च समं पिष्ट्वा द्रुते हेम्नि प्रवापयेत् ॥४९॥
जायते रसरूपं तच्चिरकालं च तिष्ठति ॥५०॥

सुवर्णद्रुतिः ५

इंद्रगोपं कुलीरास्थि देवदाल्याश्च बीजकम् ॥
चूर्णितं भावयेद् द्रावैर्देवदाल्युद्भवैर्दिनम् ॥५१॥
अनेन द्राविते हेम्नि वापो देयः पुनः पुनः ॥
तिष्ठते रसरूपं तच्चिरकालं शिवोदितम् ॥५२॥

तीक्ष्णलोहद्रुतिः ३

तीक्ष्णचूर्णं च सप्ताहं पक्वधात्रीफलद्रवैः ॥
लोलितं भावयेद् घर्मे क्षीरकंदद्रवैः पुनः ॥५३॥

सप्ताहं भावयेत्सम्यक् स्रावसंपुटके तथा ॥
धामितं द्रवमायाति चिरं तिष्ठति सूतवत् ॥५४॥

कांतलोहद्रुतिः

शृगालमेषकूर्माहिशल्यानि च शिलाजतु ॥
एतत्सर्वं चूर्णयित्वा सुतप्ते कांतचूर्णके ॥
वापयेद् द्रवतां याति यथासूतं सुनिश्चितम् ॥५५॥

सर्वलोहद्रुतिः ३

लोहचूर्णं यथेष्टैकं पनसस्य फलद्रवैः ॥
सप्ताहं भावयेद् घर्मे ह्यम्लवर्गेण मर्दयेत् ॥
द्रवते धमनेनैव लिपियोग्यं न संशयः ॥५६॥

सर्वलोहद्रुतिः ४

गंधकं रक्तलवणं तुल्यं देयं पुनः पुनः ॥
द्रुतानां तप्तचूर्णानां सर्वेषां द्रावणं परम् ॥५७॥

सर्वलोहद्रुतिः ५

पीतमण्डूकगर्भे तु चूर्णितं टंकणं क्षिपेत् ॥
रुध्वा भांडे क्षिपेद् भूमौ त्रिसप्ताहात्समुद्धरेत् ॥५८॥
तत्समस्तं विचूर्णाथ द्रुते लोहे प्रवापयेत् ॥
तिष्ठंति रसरूपाणि सर्वलोहानि नान्यथा ॥५९॥

माक्षिकसत्वद्रुतिः २

एरंडोत्थेन तैलेन गुंजाक्षौद्रं च टंकणम् ॥
मर्दितं तस्य वापेन सत्वं माक्षिकजं द्रवेत् ॥६०॥

सर्वरत्नानां सर्वलोहानां द्रुतिः

क्षारत्रयं रामठं च चणकाम्लाम्लवेतसम् ॥६१॥
ज्वालामुखी चेक्षुरकं स्थलकुंभीफलानि च ॥
स्नुह्यर्कपयसा श्लक्ष्णं पिष्ट्वा तद्गोलकं क्षिपेत् ॥६२॥
वज्रमुख्यानि रत्नानि वस्त्रे बध्वा पचेद्धठात् ॥
दोलायंत्रेण धान्याम्ले भवेद्यामाष्टकं द्रुतम् ॥६३॥
वज्राभ्रकं नीलपुष्पं मुक्ताविद्रुममाक्षिकम् ॥
पौंड्रं वैडूर्यं माणिक्यं राजावर्तेन्द्रनीलकम् ॥६४॥

वैक्रांतं स्फाटिकं चैव द्रवंति रससन्निभाः ॥
एतैरेवौषधैर्लोहजातं द्रवति वापनात् ॥६५॥

वज्रद्रुतिः १

वज्रवल्ल्यन्तरस्थं च कृत्वा वज्रं निरुंधितम् ॥
जलभांडगतं स्वेद्यं सप्ताहाद् द्रवतां व्रजेत् ॥६६॥

वज्रद्रुतिः २

सूक्ष्मचूर्णं तु सप्ताहं वेतसाम्ले विनिक्षिपेत् ॥
सप्ताहादुद्धृतं तं वै पुटे रुध्वा द्रुतिर्भवेत् ॥६७॥

वैक्रांतद्रुतिः १

श्वेतवर्णं तु वैक्रांतमम्लवेतसभावितम् ॥
सप्ताहान्नात्र संदेहः खरे घर्मे द्रवत्यलम् ॥६८॥

वैक्रांतद्रुतिः २ सवरत्नानां द्रुतिः

केतकीस्वरसं ग्राह्यं सैंधवं स्वर्णपुष्पिका ॥
इंद्रगोपकसंयुक्तं सर्वं भांडे विनिक्षिपेत् ॥६९॥
सप्ताहं स्वेदयेत्तस्मिन्वैक्रांतं द्रवतां व्रजेत् ॥
लोहाष्टकं च रत्नानि योगस्यास्य प्रभावतः ॥७०॥
कुरुते योगराजोयं रत्नानां द्रावणं परम् ॥७१॥

सर्वद्रुतीनां स्थापनाधारः

कुसुंभतैलमध्ये तु संस्थाप्या द्रुतयः पृथक् ॥
तिष्ठंति चिरकालं तु प्राप्ते कार्ये नियोजयेत् ॥७२॥

इत्येवं द्रुतिसंचयं समुचितैः सारातिसारैर्मतैः
कृत्वा वार्तिकपुंगवोत्र सततं श्रीपारदे मेलयेत् ॥
तेनैवाद्भुतभक्षणं सुकनकं कृत्वाथ विद्वद्वरे
देयं दीनजने च दुःखविमुखं कुर्यात्समस्तं जगत् ॥७३॥

इतिश्री पार्वतीपुत्र नित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे
ऋद्धिखंडापरनामके द्रुतिकरणं नाम सप्तदशोपदेशः १७ ॥

——:o:——

# ॥ अथ श्री वादिखंडे अष्टादशोपदेशः १८ ॥

द्रुतिरिह परिपाच्या जारयेत्पारदेन्द्रे मुनिगणितमथासौ सारितः कोटिवेधी ॥
अथपविकृतबीजं रत्नगर्भं द्रुतं वा चरति यदि रसेन्द्रः स्यात्तदा शब्दवेधी॥१॥

द्रुतीनां रसेन सह मेलापनम् १

पाठा वंध्या तालमूली नीलीसिंदूरचित्रका ॥
पद्मकंदं क्षीरकंदं समं नागबला तथा ॥२॥
एतेषां ग्राहयेत्स्वच्छं रसं वस्त्रेण गालितम् ॥
द्रुतिं संमुखसूतं च औषधीनां तथा द्रवम् ॥३॥
सर्वं क्षिप्त्वा घोषपात्रे शोषयेदातपे खरे ॥
द्रवः पुनः पुनर्देयो यावद्यामत्रयं भवेत् ॥४॥
मिलंति द्रुतयः सर्वाः पारदे नात्र संशयः ॥५॥

सवद्रुतिमेलापनं २

वज्रकंदामृता गुंजा द्रवैर्मर्द्यं च पूर्ववत् ॥
मिलंति द्रुतयः सर्वा रसराजे न संशयः ॥६॥

सर्वद्रुतीनां मेलापन ३

कृष्णागुरु सिता हिंगु कस्तूरीब्रह्मबीजकम् ॥
तुल्यं चूर्णं दशांशेन सूते द्रुतियुते क्षिपेत् ॥७॥
मिलंति द्रुतयः सर्वा अनेनैव न संशयः ॥८॥

सर्वद्रुतीनां मेलापनं ४

कृष्णागुरु श्वेतहिंगु सिता लशुननाभयः ॥
पूर्ववन्मर्दनेनैव मिलंति द्रुतयो रसे ॥९॥

सर्व द्रुतीनां मेलापनं ५

अम्ललालार्द्रकं निम्बपत्राणि लशुनं समम् ॥
टंकणेन समायुक्तं पूर्ववद् द्रुतिमेलकम् ॥१०॥

सर्व द्रुतीनां मेलापनं ६

माक्षिकं सविषं गुंजा टंकणं स्त्रीरजः समम् ॥
स्त्रीस्तन्यं संयुतं पिष्ट्वा तेन मूषां प्रलेपयेत् ॥११॥

द्रुतियुक्तं रसं तत्र क्षिप्त्वा रुध्वा दिनावधि ॥
स्वेदयेत्कारिषाग्निस्थं त्रिदिनं वा तुषाग्निना ॥
मिलंति द्रुतयः सर्वा मीलिता जारयेत्ततः ॥१२॥

॥ इति सर्वद्रुतिमेलापनम् ॥

( १३ आरभ्य ५६ पर्यंत श्लोकाः खण्डिताश्चात्र )

लिप्त मूषा

द्रुतयो मीलिता येन मूषां तेनैव लेपयेत् ॥
तथा च जीवयोगेन ख्यातेयं लिप्तमूषिका ॥५७॥

शतवेधी रसः ( द्रुतिजारणेन )

हेमकांतद्रुतिं तुल्यां मेलयेत्सम्मुखे रसे ॥
षोडशांशं रसात्सर्वं लिप्तमूषांधितं पुटेत् ॥५८॥
सतुषेथ करीषाग्नौ यावत्सूतावशेषितम् ॥
पुनश्च मेलयेत्तद्वत् सर्वंवज्जारयेत्ततः ॥५९॥
एवं समां द्रुतिं सूते जारयेत्क्रमयोगतः ॥
ततस्तं पक्वबीजेन सारयेज्जारणात्रयम् ॥६०॥
मूषायंत्रे तु तज्जार्यं मुखं बध्वाथ वेधयेत् ॥
तारारे ताम्रसंयुक्ते शतांशेन नियोजयेत् ॥६१॥
क्रामणेन समायुक्तं दिव्यं भवति कांचनम् ॥६२॥

सहस्रवेधी रसः ( द्रुतिजारणेन ) १

हेमाभ्रशुल्बद्रुतयो द्विगुणं जारयेद्रसे ॥
पूर्ववत्क्रमयोगेन ततो रंजकबीजकम् ॥६३॥
मूषायंत्रे समं जार्यं सारयेत्सारणात्रयम् ॥
मुखं बध्वा रसं बध्वा सहस्रांशेन वेधयेत् ॥
तारारं ताम्रसंयुक्तं दिव्यं भवति कांचनम् ॥६४॥

सहस्रवेधी रसः ( द्रुतिजारणेन ) २

कांतशुल्ब सुवर्णानां द्रुतयः सम्मुखे रसे ॥
जारयेत्पूर्वयोगेन प्रत्येकं द्विगुणं क्रमात् ॥६५॥
ततो रंजकबीजानि द्विगुणं तस्य जारयेत् ॥
अथ बीजैस्त्रिधा सार्यं जारयेत्सारयेत्पुनः ॥६६॥
जारितोथ मुखं बध्वा रसं बध्वाथ वेधयेत् ॥

अयुतांशेन तेनैव पूर्ववत्कांचनं भवेत् ॥६७॥

लक्षवेधी रसः ( द्रुतिजारणेन )

कांतहेमाभ्रद्रुतयो यावत्पंचगुणं क्रमात् ॥
जारयेत्पूर्वयोगेन ततो रंजकबीजकम् ॥६८॥
जार्यं पंचगुणं तस्मिन्मूषायंत्रे प्रयत्नतः ॥
सारयेत्पक्वबीजेन त्रिधा तं जारयेत्पुनः ॥६९॥
पुनः सार्यं पुनर्जार्यं एवं वारत्रये कृते ॥
मुखं बध्वा रसं बध्वा लक्षवेधी भवेद्रसः ॥७०॥

दशलक्षवेधी रसः ( द्रुतिजारणेन )

आरत्नहेमद्रुतयः षड्गुणं जार्यते रसे ॥
षड्गुणं रंजकं बीजं ततस्तस्यैव जारयेत् ॥७१॥
त्रिधा सार्यं पुनर्जार्यं एवं वारचतुष्टयम् ॥
मुखं बध्वा रसं बध्वा नागतैलेन वेधयेत् ॥
दशलक्षांशयोगेन दिव्यं भवति कांचनम् ॥७२॥

शतादारभ्य कोटिपर्यंतं वेधः ( द्रुतिजारणेन )

प्रत्येकं सूततुल्यांशमभ्रहेमद्रुतिद्वयम् ॥
मेलितं पूर्वयोगेन जारयेत्तत्क्रमेण वै ॥७३॥
शतवेधी भवेत्सूतो द्विधा सहस्रवेधकः ॥
त्रिगुणेयुतवेधी स्याल्लक्षवेधी चतुर्गुणे ॥७४॥
सम्यक् पंचगुणे जीर्णे दशलक्षाणि विध्यति ॥
एवं रसगुणे जीर्णे कोटिवेधी भवेद्रसः ॥७५॥
ततः सप्तगुणं तस्य जार्यं रंजकबीजकम् ॥
त्रिधाथ पक्वबीजेन सारयेत्पूर्ववत्क्रमात् ॥७६॥
जारणा सारणा कार्या पुनः सारणजारणे ॥
अनेन क्रमयोगेन सप्तशृंखलिकाक्रमात् ॥७७॥
मुखं बध्वा रसं बध्वा कोटिवेधी भवेत्तु सः ॥
तारे च ताम्रसंयुक्ते क्रामणांतं नियोजयेत् ॥७८॥

रौप्यकरणम् ( द्रुतिजारणेन )

श्वेताभ्रतारघोषारद्रुतयः सम्मुखे रसे ॥

जार्याः समा यथापूर्वं तारबीजेन सारयेत् ॥
त्रिधा तं पूर्ववज्जार्यं मुखं बध्वाथ बंधयेत् ॥७९॥

( अत्र श्लोकैकः खण्डितः )

२० सहस्रवेधी रसः ( रौप्यकरणम् ) द्रुतिजारणे

कांततारारद्रुतयो द्विगुणाः समुखे रसे ॥
जारयेत्रिगुणा यावत्पक्वबीजेन चाथवा ॥८०॥
सारितं जारितं कुर्यात्पूर्ववच्छृंखलात्रयम् ॥
मुखं बध्वा रसं बध्वा अयुतांशेन वेधयेत् ॥८१॥
द्रुते वंगे तु तत्तारं भवेत्कुंदेन्दुसन्निभम् ॥८२॥

लक्षवेधी रसः (रौप्यकरणम्) द्रुतिजारणे

तारतीक्ष्णघोषजाता द्रुतयः समुखे रसे ॥
कुर्यात् चतुर्गुणा यावत् तारबीजेन सारयेत् ॥८३॥
चतस्रः शृंखला यावन्मुखं बध्वाथ बंधयेत् ॥
अनेन लक्षभागेन बंगस्तंभो भवेद् दृढः ॥८४॥

कोटिवेधी रसः ( द्रुतिजारणं )

तारा कांतद्रुतयो जार्या सप्तगुणा रसे ॥
तत्सार्यं तारबीजेन सप्तशृंखलिका क्रमात् ॥८५॥
मुखं बध्वा रसं बध्वा कोटिवेधी भवेद्रसः ॥८६॥

कोटिवेधी रसः (स्वर्णकरणम्) द्रुतिजारणं २

समुखस्य रसेन्द्रस्य धान्याभ्रं पूर्वसंस्कृतम् ॥
चारयेज्जारयेत्तद्वत् समांशं चाथ तस्य वै ॥८७॥
षड्गुणं द्वंद्विते व्योम्नि सर्वं जार्यं च पूर्ववत् ॥
ततो माक्षिकसत्वं च पादांशं तस्य गर्भतः ॥८८॥
द्रावयेज्जारयेत्तद्वत्तावद्रसकसत्वकम् ॥
पूर्ववद् द्रावितं जार्यं मूषायंत्रे तु तत्क्रमात् ॥८९॥
गर्भद्रावणकं बीजं द्रावितं जारयेत्पुनः ॥
भवेच्चतुर्गुणं यावत्पश्चादभ्रसुवर्णयोः ॥९०॥
द्रुतिं समसमां सूते द्वंद्वयित्वाथ जारयेत् ॥
पूर्ववत्क्रमयोगेन कांतहेम्नो द्रुति पुनः ॥९१॥
प्रत्येकं जारयेत्तुल्यं स्वर्णतीक्ष्णद्रुतिस्तथा ॥

द्वंद्वितां जारयेत्तुल्यां ततो रंजकबीजकम् ॥९२॥
पूर्ववत्क्रमयोगेन जार्यं तस्मिन् चतुर्गुणम् ॥
ततस्तं पक्वबीजेन सारयेत्सारणात्रयम् ॥९३॥
तदेव जारितं कुर्यान्मूषायंत्रे तु पूर्ववत् ॥
इत्येवं सप्तवाराणि सारितं तत् त्रिधा त्रिधा ॥९४॥
पूर्ववज्जारणा कार्या ख्यातेयं सप्तशृंखला ॥
सारणा यत्र यत्रोक्ता विज्ञेया वार्तिकैः पुनः ॥९५॥
मुखं बध्वा रसं बध्वा कोटिवेधी भवेद्रसः ॥
क्रामणेन समायुक्तं चंद्रार्के कांचनं भवेत् ॥९६॥
कर्माष्टादशकेनैव क्रमाद्वेधः प्रकाशितः ॥
समुखं निर्मुखं बंधं रसबंधं तथेरितम् ॥९७॥
गोपितं शंभुना सिद्धैः सूचितं न प्रकाशितम् ॥
वार्तिकानां हितार्थाय मया तत्प्रकटीकृतम् ॥९८॥

॥ इति एकविंशति क्रमेण वेधः ॥

वज्रबीजम्

वज्रभस्म शुद्धहेम व्योमसत्वमयोरजः ॥
चत्वारि समभागानि नागचूर्णं चतुःसमम् ॥९९॥
द्वंद्वमेलापलिप्तायां मूषायां चांधितं धमेत् ॥
एकीभूते समुद्धृत्य मूषायां प्रकटं धमेत् ॥१००॥
माक्षिकाद्धौतसत्वं च स्तोकं स्तोकं विनिक्षिपेत् ॥
हेमवज्रावशेषं तु यावत्स्यादुद्धरेत्ततः ॥१०१॥
तस्मिन्नागं व्योमसत्वमयश्चूर्णं च पूर्ववत् ॥
निक्षिपेद् द्वंद्वलिप्तायां मूषायां चांधितं धमेत् ॥१०२॥
मिश्रीभूतं समुद्धृत्य मूषायां प्रकटं धमेत् ॥
स्वर्णवज्रावशेषं तथावज्जातं समुद्धरेत् ॥१०३॥
एवं पुनः पुनर्जार्यं व्योमसत्वायसं फणी ॥
पूर्ववत् क्रमयोगेन षड्गुणं जारयेत्पुनः ॥१०४॥
......................माक्षिकाद्धौतसत्वकम् ॥
क्षिपन् क्षिपन्धमेत्तं तु वाह्यमेवं तु षड्गुणम् ॥१०५॥

वज्रबीजमिदं ख्यातं जारणे परमं हितम् ॥१०६॥

॥ इति वज्रबीज करणम् ॥

वज्रबीजजारणेन स्पर्शवेधी शब्दवेधी रसः

वासनामुखिते सूते द्रुतं व्योमसत्वकम् ॥
पूर्ववत् क्रमयोगेन षड्गुणं जारयेत्पुनः ॥१०७॥
तस्मिन् जार्यं वज्रबीजं व्योमसत्वक्रमेण वै ॥
ग्रसते कच्छपे यंत्रे यथाजीर्णं तथा फलम् ॥१०८॥
द्विगुणेयुतवेधी स्यात्त्रिगुणे लक्षवेधकः ॥
यदा चतुर्गुणं जीर्णं दशलक्षाणि विध्यति ॥१०९॥
कोटिवेधी पंचगुणे दशकोट्यस्तु षड्गुणे ॥
अर्बुदांशात्सप्तगुणे शंखवेध्यष्टमे गुणे ॥११०॥
नवमे खर्व वेधी स्याद्दशमे पद्मवेधकः ॥
त्रयोदशगुणे जीर्णे स्पर्शवेधी भवेद्रसः ॥१११॥
चतुर्दशगुणे जीर्णे भवेत्पाषाणवेधकः ॥
त्रिपंचगुणिते जीर्णे सशैलवनकाननाम् ॥११२॥
वेधयेन्मेदिनी सर्वां स भवेद् भूचरो रसः ॥
एवं कालागुणे जीर्णे त्रैलोक्य व्यापको भवेत् ॥११३॥
खेचरो रसराजेन्द्रो मुखस्थः खेगतिप्रदः ॥
जायते च यथाशक्त्या ततः सार्यं क्रमेण वै ॥११४॥
वज्रबीजेन तुल्येन प्रथमा सारणा भवेत् ॥
पूर्ववज्जारणा कार्या द्विगुणेनानुसारयेत् ॥११५॥
तथैव जारयेद्भूयः कर्तव्या प्रतिसारणा ॥
त्रिगुणेन तु तेनैव मुखं बध्वाथ बंधयेत् ॥११६॥
द्विसहस्रादि लक्षांतं वेधकस्याप्ययं विधिः ॥
इत्येवं च पुनः कुर्यात्सारणा कोटिवेधके ॥११७॥
दशकोट्याद्यर्बुदांते च जारिते वेधके रसे ॥
त्रिप्रकारा प्रकर्तव्या सारणा तु त्रिधा त्रिधा ॥११८॥
चतुर्गुणा शंखवेधे तदूर्ध्वं पंचधा भवेत् ॥
षड्गुणा पद्मवेधे तु मूलवेधे तु सप्तधा ॥११९॥

अष्टधा स्पर्शवेधे तु दशधा शब्दवेधके ॥
ततस्त्रयोदशगुणाः कलागुणे कलागुणाः ॥१२०॥
क्रमशः सारणा कार्या यथाशक्त्यानुसारतः ॥
मुखं बध्वा रसं वध्वा पश्चाद्वेधं प्रकल्पयेत् ॥१२१॥
चंद्रार्के वा भुजंगे वा क्रामणेन समायुतम् ॥
इत्येवं पद्मपर्यंतं संख्यावेधात्तु यो रसः ॥१२२॥
तद्वेष्टितं मधूच्छिष्टैः कुंतवेधे तु योजयेत् ॥
तत्सर्वं कनकं दिव्यं जायते शंभुभाषितम् ॥१२३॥

॥ अथ विविधवेध प्रकार कथनम् ॥

धूमवेध विधिः

धूमवेधे रसं पिष्ट्वा तेन वस्त्रं प्रलेपयेत् ॥
ततो ज्योतिष्मतीतैले धृत्वा वर्तिं कल्पयेत् ॥१२४॥
ज्वलितां तां ताम्रकूटे योजयेत्पत्रतां गते ॥
तद्धूमगंधमात्रेण सर्वं भवति कांचनम् ॥१२५॥

स्पर्शवेध विधिः

स्पर्शवेधी रसो योसौ गुटिकां तेन कारयेत् ॥
द्रुतानामष्टलोहानां क्षिप्त्वा मध्ये समुद्धरेत् ॥
तद् भवेत्कांचनं दिव्यमसंख्यं नात्र संशयः ॥१२६॥

शब्दवेध विधिः

शब्दवेधी रसो योसौ गुटिकां तेन कारयेत् ॥
धारयेद्वक्त्रमध्ये तु ततो लोहानि वेधयेत् ॥
तत्सर्वं जायते स्वर्णं श्रुते शब्दे न संशयः ॥१२७॥

पाषाणवेध विधिः

पाषाणवेधको योसौ पर्वतानि तु तेन वै ॥
वेधयेदग्निना तप्तान् सर्वं भवति कांचनम् ॥१२८॥

मेदिनी वेध विधिः

मेदिनीवेधको योसौ राजिकार्धार्ध मात्रकः ॥
तेनैव वेधयेत्सर्वां सशैलवनकाननाम् ॥
मेदिनी सा स्वर्णमयी भवेत्सत्यं शिवोदितम् ॥१२९॥

### त्रैलोक्य व्यापक विधिः

त्रैलोक्य व्यापको योसौ तं करे धारयेत्तु यः ॥
स भवेत्खेचरो दिव्यो महाकायो महाबलः ॥१३०॥
स्वेच्छाचारी महावीरः शिवतुल्यो भवेत्तु सः ॥
तस्य मूत्रपुरीषाभ्यां सर्वलोहानि कांचनम् ॥१३१॥
जायंते नात्र संदेहस्तत्स्वेदस्पर्शनादपि ॥
रसकायो महासिद्धः सर्वलोकेषु पूज्यते ॥१३२॥
अवध्यो देवदैत्यानां यावच्चंद्रार्कमेदिनी ॥
भुंजानो दिव्यभोगांश्च क्रीडते भैरवो यथा ॥१३३॥

॥ इति विविध वेध प्रकार कथनम् ॥

### रसबीजं शतवेधी

भागत्रयं शुद्धसूतं भागैकं मृतवज्रकम ॥
काकिनी रजसा मर्द्यं तप्तखल्वे दिनावधि ॥१३४॥
तेनैव पादभागेन हेमपत्राणि लेपयेत् ॥
व्योमवल्लीरसैः पिष्टं कांतटंकणतालकम् ॥१३५॥
अनेन चाष्टमांशेन पूर्वलिप्तानि लेपयेत् ॥
रुध्वा स्वेद्यं दिवारात्रौ करीषाग्नौ ततः पुनः ॥१३६॥
कदलीकंद सौवीर टंकणं च समं समम् ॥
कंटकार्या द्रवैः पिष्ट्वा मूषा लेप्या त्वनेन वै ॥१३७॥
तन्मध्ये पूर्वपक्वं यद्रुध्वा धाम्यं दृढाग्निना ॥
तत्सर्वं जायते खोटं सौवीरं काचटंकणम् ॥१३८॥
दत्वा दत्वा धमेत्खोटं जायते भास्करोपमम् ॥
रसबीजमिदं ख्यातं वेधके जारणे हितम् ॥
चंद्रार्के शतवेधी स्यात्कांचनं कुरुते शुभम् ॥१३९॥

### शब्दवेधी रसः

अथ वक्ष्ये रसेन्द्रस्य समांशस्य च भक्षणम् ॥
पूर्वोक्तं रसबीजं तु समुखे चारयेद्रसे ॥१४०॥
अभ्रसत्वप्रकारेण जारयेत्तत्क्रमेण वै ॥
पंच पंचांशगुणितं यदा ग्रसति पारदः ॥१४१॥

ततस्तेनैव बीजेन सारणाक्रामणात्रयम् ॥
ततश्च जारितं कुर्यान्मुखं बध्वाथ बंधयेत् ॥
शब्दवेधी भवेत्सो हि रसः शंकरभाषितम् ॥१४२॥

रसबीजं शतवेधि

सम्मुखस्य रसेन्द्रस्य पक्वबीजं समांशकम् ॥
जारयेच्चाभिषिक्तं तदभ्रसत्वक्रमेण वै ॥१४३॥
मृतवज्रं षोडशांशं तस्मिन्सूते विनिक्षिपेत् ॥
तालकं टंकणं कांतं तृतीयं चाष्टमांशकम् ॥१४४॥
दत्वा तस्मिंस्तदा खल्वे व्योमवल्लीद्रवैर्दिनम्
तत्सर्वं मर्दितं कृत्वा छायाशुष्कं प्रयत्नतः ॥१४५॥
द्वंद्वमेलापलिप्तायां मूषायां चांधितं धमेत् ॥
करीषाग्नौ दिवारात्रौ ध्माते खोटं भवेत्तु तत् ॥१४६॥
काच टंकण सौवीरैः शोधयेत्तं धमन् धमन् ॥
रसबीजमिदं ख्यातं पूर्ववत् शतवेधकम् ॥
जायते रसराजोयं कुरुते कनकं शुभम् ॥१४६॥

शब्दवेधी रसः

अथवा सम्मुखे सूते पूर्ववज्जारयेद्दिनम् ॥
पंच पंचांशगुणितं यदा ग्रसति पारदः ॥१४८॥
रसबीजेन चान्येन त्रिधा सार्यं क्रमेण वै ॥
सारिते जारणा कार्या मुखं बध्वाथ बंधयेत् ॥
शब्दवेधी भवेत्साक्षात्ताम्रं स्वर्णं करोति वै ॥१४९॥

॥ इतिश्री रसबीजस्य जारणाक्रमेण हेमक्रिया ॥

रसबीजम्

पक्वबीजस्य चूर्णं तु पूर्ववच्चाभिषेकितम् ॥
षोडशांशेन सूतस्य सम्मुखस्य तु चारयेत् ॥१५०॥
द्व्यंगुल्यां मर्दनेनैव घर्मे चरति तत्क्षणात् ॥
तद्बीजं जारयेत्तस्य स्वेदनैश्चाभ्रसत्ववत् ॥१५१॥
अनेन क्रमयोगेन समं बीजं तु सारयेत् ॥
तद्वद् द्वादशभागेन पक्वबीजं तु तस्य वै ॥१५२॥

चारयेन्मर्दयन्नैव कच्छपाख्ये थ जारयेत् ॥
अभ्रसत्वमकारेण समं यावच्च जारयेत् ॥१५३॥
ततस्तस्याष्टमांशेन पक्वबीजं तु दापयेत् ॥
मर्दयेत्तप्तखल्वे तत् चरत्येव हि तत्क्षणात् ॥१५४॥
तं सूतं सूरणे कंदे गर्भे क्षिप्त्वा निरुध्य च ॥
लिप्त्वा कंदं पुटे पच्याद्यथा कंदो न दह्यते ॥१५५॥
तत्रैव ग्रसते सूतो जीर्णे ग्रासं तु दापयेत् ॥
अनेन क्रमयोगेन समबीजं समं पुनः ॥१५६॥
पादांशं पक्वबीजं तु दत्वा चार्यं च मर्दयेत् ॥
मूषायंत्रे ततो जार्यं स्वेदनेन पुनः पुनः ॥१५७॥
अनेन क्रमयोगेन समबीजं च जारयेत् ॥
एवं चतुर्गुणे जीर्णे पक्वबीजे तु पारदे ॥
जायते कुंकुमाभस्तु रसेन्द्रो बलवत्तरः ॥१५८॥

धूमवेधी शब्दवेधी पाषाणवेधी रसः

अभ्रकं भ्रामकं ब्राह्मी मृतलोहाष्टकं तथा ॥
महारसाश्चोपरसाः कटुतुम्ब्याश्च बीजकम् ॥१५९॥
शंखनाभिर्मेषशृंगी वज्रकंदं समं समम् ॥
मयूरस्य तु रक्तेन सर्वं पाच्यं दिनावधि ॥१६०॥
ततस्तं मर्दयेत्खोटं शिखिरक्ते दिनद्वयम् ॥
अनेन मृतवज्रं तु लेपितं कारयेत्ततः ॥१६१॥
मूषामाम्रफलाकारां द्विद्विलिप्तां तु कारयेत् ॥
तन्मध्ये पूर्वसूतं तु पादांशं लिप्तवज्रकम् ॥१६२॥
अथवा वज्रबीजं च पूर्वकल्केन लेपितम् ॥
अथवा द्रुतं वज्रं समं स्वर्णेन थल्कृतम् ॥१६३॥
तल्लिप्तं पूर्वकल्केन पादांशं तत्र निक्षिपेत् ॥
आच्छादितं धमेन्मंदं मूषाधोमुखवायुना ॥१६४॥
किंचित् किंचिद् बिडं दत्वा जीर्णे तस्मात्समुद्धरेत् ॥
पुनस्तल्लिप्तमूषायां क्षिप्त्वा वज्रेण संयुतम्
पूर्ववत्क्रमयोगेन जीर्णे वज्रे समुद्धरेत् ॥

अनेन क्रमयोगेन वज्रं वा वज्रबीजकम् ॥१६५॥
स्वर्णद्वंद्वितवज्रं वा जारयेत्तत्पुनः पुनः ॥
एकादशगुणं यावत्तावज्जार्यं रसेन्द्रके ॥१६६॥
सुदग्धां शंखनाभिं तु मातुलिंगरसैर्दिनम् ॥
मर्दयेद्गोलयेत्तेन मुक्ताचूर्णं सुशोभनम् ॥१६७॥
द्रावितं मौक्तिकं वाथ पूर्ववज्जारयेद्धमन ॥
मूषायां विडलिप्तायां पादं पादं शनैः शनैः ॥१६८॥
एकादशगुणं यावत्तज्जार्यं कच्छपेन तत् ॥१६९॥
नीलोनिर्यासंसंतुल्यं शिखिपित्तं विमर्दयेत् ॥
इंद्रनीलं च नीलं च तेन लिप्त्वाथ जारयेत् ॥१७०॥
पूर्ववत्क्रमयोगेन धमनात्स्वेदनेन वा ॥
विडलेपितमूषायामेकादशगुणं क्रमात् ॥१७१॥
द्रावितं चेन्द्रनीलं वा नीलं च द्रावितं क्रमात् ॥
द्वंद्वितं रसराजस्य जार्यमभ्रद्रुतिर्यथा ॥
इत्येवं जारयेन्नीलं द्रावितं कठिनं तु वा ॥१७२॥
शिखिपित्तनृरक्ताभ्यां लेपितं पद्मरागकम् ॥
जारयेद्रसराजस्य त्वेकादशगुणं क्रमात् ॥
जार्यं वा द्रावितं तत्तु यथा चाभ्रद्रुतिः पुरा ॥१७३॥
रजनी तुल्यकंकुष्ठं ब्रह्मपुष्पद्रवैर्दिनम् ॥
भावितं तेन लिप्तं तु पुष्परागं तु जारयेत् ॥१७४॥
कठिनं द्रावितं वाथ रुद्रसंख्याक्रमेण वै ॥
एवं रत्नैर्भवेत्तृप्तो रसराजो महाबलः ॥१७५॥
अनेनैव शतांशेन मधूच्छिष्टेन लेपयेत् ॥
शुद्धहाटकपत्राणि रुध्वा गजपुटे पचेत् ॥१७६॥
इंद्रगोपसमाकारं तत्स्वर्णं जायते शुभम् ॥
अनेनैव सुवर्णेन सारयेत्सारणात्रयम् ॥१७७॥
रत्नतृप्तं सूतराजं मूषायंत्रे विनिक्षिपेत् ॥
शनैः शनैर्धमेत्तावद्यावत्सूतावशेषितम् ॥१७८॥
मुखं बध्वा रसं बध्वा धूमवेधी भवेत्तु तत्

अनेन क्रमयोगेन पुनः सारणजारणा ॥१७९॥
कर्तव्यास्त्रिप्रकारा वै मुखं बध्वाथ बंधयेत् ॥
शब्दवेधी रसेन्द्रोयं जायते खेगतिप्रदः ॥१८०॥
पुनश्च त्रिविधा कार्या सारणाज्जारणा क्रमात् ॥
तस्यैव तु रसेन्द्रस्य मुखबंधं च कारयेत् ॥१८१॥
तेनैव वेधयेत्सर्वं गिरिपाषाणभूतलम् ॥
जायते कनकं दिव्यं जाम्बूनदसमप्रभम् ॥१८२॥
सिद्धैर्भूचरखेचरा शिवमुखात्प्राप्ता महाजारणा
कृत्वा तां च रसे रसातलमिदं स्वर्णेन पूर्णं कृतम् ॥
तेषां कर्म विचार्य सारमखिलं स्पष्टीकृतं तन्मया
यः कश्चिद् गुरुतंत्रमंत्रनिरतस्तस्यैव सिद्धं भवेत् ॥१८३॥

इतिश्री पार्वतीपुत्रनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके द्रुतिवज्ररत्नजारणाक्रमेण पाषाणवेधपर्यंतं वेधविधिर्नामाष्टादशोपदेशः १८ ॥

---

## ॥ अथ श्री वादिखंडे एकोनविंशोपदेशः १९ ॥

संसारे सारभूतं सकलसुखकरं सुप्रभूतं धनं वै
तत्साध्यं साधकेन्द्रैर्गुरुमुखविधिना वक्ष्यते तस्य सिद्ध्यै ॥
रत्नादीनां विशेषात्करणमिह शुभं गंधवादं समग्रं
ज्ञात्वा तत्तत्सुसिद्धं ह्यनुभवपथगं पावनं पंडितानाम् ॥१॥

पद्मरागकरणम्

चतुर्गुणेन तोयेन लाक्षां पिष्ट्वा तु तद्द्रवैः ॥
वस्त्रपूतं शतपलं गृह्य मृद्भाण्डगं पचेत् ॥२॥
मृद्वग्निना पादशेषं जातं यावच्च तस्य वै ॥
क्षिपेत्पलं पलं चूर्णं सर्जिटंकण लोध्रकम् ॥३॥
किंचित्पच्यात्ततः शीतं काचकूप्यां सुरक्षयेत् ॥
स्थूलमत्स्यत्वचं पच्याद्दिवारात्रं जलेन तत् ॥४॥
घनीभूतं समुत्तार्य ख्यातोयं मत्स्यवज्जलं ॥

एतत्कर्षद्वयं तस्याः काचकूप्यां विनिक्षिपेत् ॥५॥
वर्षोपलास्तु तेनैत्र लालयित्वा सुपाचिते ॥
मधूकतैलमध्ये तु क्षणं पक्का समुद्धरेत् ॥
जायंते पद्मरागाणि दिव्यतेजोमयानि च ॥६॥

इन्द्रनीलकरणम्

नीलीचूर्णं पलैकं तु पूर्वकूप्यां तु तद्द्रवम् ॥
तद्द्रवं द्विपलं चूर्णं क्षिप्त्वा सर्वं विलोलयेत् ॥७॥
क्षिप्त्वा वर्षोत्पलांस्तेन पूर्वतैलगतान्पचेत् ॥
इन्द्रनीलानि तान्येव जायंते नात्र संशयः ॥८॥

मरकतमणि करणम्

मञ्जिष्ठां तालकं नीली समचूर्णं प्रकल्पयेत् ॥
काचकूप्यां स्थितैर्द्रावैः सर्वमेतत्सुलोलयेत् ॥९॥
वर्षोत्पलांस्तु तेनैव सिक्त्वा पच्याच्च पूर्ववत् ॥
सर्वे मरकतास्तेन समीचीना भवंति वै ॥१०॥

गोमेदमणिकरणम्

मञ्जिष्ठायाः कषायेण पेषयेन्मत्स्यकज्जलम् ॥
वर्षोत्पलांस्तु तेनैव सिक्त्वा पच्याच्च पूर्ववत् ॥११॥
गोमेदानि तु तान्येव भवंति ते न संशयः ॥१२॥

पुष्पराग करणम्

पिष्ट्वा तालकतुल्यं तु जलैके(?) रसकुंकुमम् ॥
तन्मध्ये चाष्टमांशं तु क्षिपेन्मत्स्योत्थकज्जलम् ॥१३॥
तत्सर्वं पाचयेद्यामं अवतार्य सुरक्षयेत् ॥
वर्षोपलांस्तु तेनैव सिक्तान्पच्याच्च पूर्ववत् ॥
भवंति पुष्परागास्ते यथा खन्युत्थितानि च ॥१४॥

नीलमाणिक्य करणम्

नीलीचूर्णस्य तुल्यांशं क्षिपेन्मत्स्योत्थकज्जलम् ॥
बीजकाष्ठं च तुल्यांशं जले स्थाप्यं दिनावधि ॥१५॥
तत्सर्वं पाचयेद्याममवतार्य सुरक्षयेत् ॥
वर्षोपलांस्तु तेनैव सिक्ताः पच्याच्च पूर्ववत् ॥
नीलमाणिक्यसदृशास्ते भवंति न संशयः ॥१६॥

मुक्ताकरणम् १

प्रोक्तानि रंगद्रव्याणि काचकूप्यां पृथक् पृथक् ॥
रक्षयित्वा प्रयत्नेन प्राप्ते कार्ये नियोजयेत् ॥१७॥
सूर्यकांतस्य मध्ये तु विलं कुर्यात्सुवर्तुलं ॥
तथान्यं सूर्यकान्तं च कुर्यादाच्छादने हितम् ॥१८॥
सूक्ष्ममुक्ताफलान्यादौ द्रावयेत्पूर्वयोगतः ॥
तद्द्रुतं सूर्यकांतस्य विले पूर्यं प्रयत्नतः ॥१९॥
सूर्यकान्तेनापरेण छादितं धर्मधारितम् ॥
याममात्राद्भवेद्बद्धं मौक्तिकं चातिशोभनम् ॥२०॥
छिद्रं कृत्वा निवध्याथ सुशुभ्रे वस्त्रखण्डके ॥
सुशुभ्रैस्तंडुलैः सार्धं कण्डयेत्तदुलूखले ॥२१॥
लघुहस्तेन यामैकं तत उद्धृत्य क्षालयेत् ॥
त्वचारिष्टफलानां तु जलेन सह पेषयेत् ॥
तेनैव क्षालिते मुक्ताफलं भवति शोभनम् ॥२२॥

मुक्ताकरणम् २

मौक्तिकानि सुसूक्ष्माणि चूर्णितानि विनिक्षिपेत् ॥
प्रसूताया इडायास्तु सद्यः क्षीरैः क्षणावधि ॥२३॥
तेनैव वर्तुलाकारा गुटिकाः कारयेत्ततः ॥
काचपात्रे स्थिताः शोष्याः छायायां दिनमात्रकम् ॥२४॥
प्रोतयेदश्ववालेन मालां कृत्वाथ शोषयेत् ॥
छायायां कठिना यावत्तावत्स्थाप्या विलंबिताः ॥२५॥
स्थूलस्य कृष्णमत्स्यस्य एककंटस्य चोदरात् ॥
निवार्यांत्राणि तत्रैव पूर्वमालां निवेशयेत् ॥२६॥
उदरं सीवयेत्सूत्रेणैव भाण्डे निरुध्य तत् ॥
मासमात्रात्समुद्धृत्य छायायां शोषयेत्पुनः ॥२७॥
कंडनं क्षालनं चैव पूर्ववत्कारयेच्छनैः ॥
भवंति तानि शुभ्राणि सम्यङ् मुक्ताफलानि वै ॥२८॥

मुक्ताकरणम् ३

मुक्ताशुक्तिं समादाय जलशुक्तिमथापि वा ॥

घर्षयेत्पृष्ठभागं तु तस्य कार्ष्ण्यापनुत्तये ॥२९॥
ताः शुभ्राश्चूर्णयेच्छ्लक्ष्णमीडाक्षीरादिपूर्ववत् ॥
कारयेत्क्षालनान्तं च मौक्तिकानि भवंति वै ॥३०॥

मुक्ताकरणम् ४

सद्य उद्धृत्य मत्स्यस्य स्थूलस्य चक्षुषी हरेत् ॥
एकैकं बंधयेद्वस्त्रे ईडाक्षीरैर्दिनं पचेत् ॥३१॥
छायायां शोषयेत्पश्चात् कण्डनं क्षालनं ततः ॥
कारयेत्पूर्ववत्तानि मौक्तिकानि भवंति वै ॥३२॥

प्रवालकरणम् १

दग्धशंखं च दरदं समं चूर्णं प्रकल्पयेत् ॥
प्रसूताया महिष्यास्तु पंचमे दिवसे हरेत् ॥३३॥
क्षीरं तेनैव तन्मर्द्यं यामैकं पूर्वचूर्णकम् ॥
वर्तुलां गुटिकां कृत्वा प्रोतयेत्ताम्रसूतके ॥३४॥
रंभागर्भदलेनैव मध्यमांगुष्ठतर्जनी ॥
वेष्टयित्वा तु तैर्ग्राह्या गुलिकास्ताः पृथक् पृथक् ॥३५॥
आवर्त्यावर्त्य संस्थाप्या रंभापत्रैः प्रयत्नतः ॥
छायाशुष्काः शुभाः प्रोत्यास्ताम्रसूत्रेण वै पुनः ॥३६॥
मधुकं तप्ततैलाक्तं धूमेन स्वेदयेच्छनैः ॥
जायते पद्मरागाभं प्रवालं नात्र संशयः ॥३७॥

प्रवालकरणम् २

दग्धः शंखः ससिन्दूरं समांशं चूर्णयेत्ततः ॥
क्षीरैः सद्यप्रसूताया एडाया मर्दयेद् दृढम् ॥३८॥
पूरयेच्च तृणोत्थे वा नाले वंशादिसंभवे ॥
सुपक्वे चान्नभाण्डे तु यवागूवर्जिते क्षिपेत् ॥३९॥
आच्छाद्य पच्यान्मन्दाग्नौ घटिकान्ते समुद्धरेत् ॥
प्रवाला नलिकागर्भे जायंते पद्मरागवत् ॥४०॥

हिंगूळ करणम्

अशुद्धं पारदं भागं चतुर्भागं च टंकणम् ॥

उभौ क्षिप्त्वा लोहपात्रे क्षणं मृद्वग्निना पचेत् ॥४१॥
तस्मिन्मनःशिलाचूर्णं पारदाद्दशमांशतः ॥
क्षिप्त्वा चाल्यमयोदर्व्या ह्यवतार्य सुशीतलम् ॥४२॥
कृत्वाथ खण्डशः क्षिप्त्वा काचकूप्यां निरुध्य च ॥
वस्त्रमृत्तिकया सम्यक् काचकूपीं प्रलेपयेत् ॥४३॥
सर्वतोंगुलमानेन छायाशुष्कं तु कारयेत् ॥
वालुकायंत्रगर्भे तु द्विदिनं मृदुनाग्निना ॥ ॥४४॥
क्रम वृद्धाग्निना पश्चात्पचेद्दिवसपञ्चकम् ॥
सप्ताहात्तत्समुद्धृत्य हिंगुलं स्यान्मनोहरम् ॥४५॥

सिंदूर करणम्

चिंचात्वग्भस्मपादांशं द्रुते नागे विनिक्षिपेत् ॥
पाचयेल्लोहजे पात्रे लोहदर्व्या निघर्षयेत् ॥
चण्डाग्निना दिनैकं तु सिन्दूरं जायते शुभम् ॥४६॥

सिन्दूरकरणम् २

रक्तशाखिन्यपामार्गकुटजस्य तु भस्मकम् ॥
चतुर्थांशं द्रुते नागे दत्वा मर्द्यं दिनद्वयम ॥४७॥
पूर्ववल्लोहपात्रे तु सिन्दूरं जायते शुभम् ॥४८॥

सिन्दूरकरणम् ३

भस्मना पूर्ववन्नागं शाकस्य वारिजस्य वा ॥
सिन्दूरं जायते दिव्यं यथेष्टं नात्र संशयः ॥४९॥

सिन्दूरकरणम् ४

पलानां द्विशतं नागं द्रावयेल्लोहभाजने ॥
समूलवासकाभस्म पादांशं तत्र निक्षिपेत् ॥५०॥
पीतवर्ण भवेद्यावत्तावत् पच्यात् प्रचालयेत् ॥
ततः सुशीतलं कृत्वा जलेन चालयेत्पुनः ॥५१॥
पलमात्रा वटी कृत्वा वासाभस्मोपरि क्षिपेत् ॥
छायाशुष्का समाहृत्य मृद्भाण्डे नूतने क्षिपेत् ॥५२॥
क्षिप्त्वा रुध्वा पचेच्चुल्यां निर्वाते तीव्रवह्निना ॥

छिद्रं कुर्याद् भाण्डवक्त्रे शलाकां लोहजां क्षिपेत् ॥५३॥
रक्तवर्णा यदा स्यात्सा तावत्पच्यात्परीक्षयेत् ॥
सिन्दूरं जायते दिव्यं सिद्धयोग उदाहृतः ॥५४॥

सैंधवकरणम्

नवभाण्डे पलशतं सामुद्रलवणं क्षिपेत् ॥
निष्कं निष्कं सूतगंधौ क्षिप्त्वा चण्डाग्निना पचेत् ॥५५॥
द्वियामान्ते क्षिपेत्तस्मिल्लोहनाराचकं यदि ॥
रक्तवर्णं भवेत्तद्वै तदा वह्निं निवारयेत् ॥५६॥
स्वभावशीतलं ग्राह्यं सिन्धूत्थं लवणं भवेत् ॥५७॥

सुवर्चल ( सैंचळ ) करणम्

आरनालं पलैकं तु द्विनिष्कं च सुवर्चलम् ॥
माषैकं गंधकं पिष्ट्वा सर्वं पात्रे तु धारयेत् ॥५८॥
पलैकं सैंधवं तप्तं कृत्वा तत्र निषेचयेत् ॥
पुनस्ताप्यं पुनः सेच्यं द्रवो यावद्विशुष्यति ॥
सुवर्चलं भवेत्तावन् नात्र कार्या विचारणा ॥५९॥

हिंगुकरणम् १

हिंगुनागरमेकैकं लशुनस्य पलद्वयम् ॥
चतुष्पलं निम्बबीजं माषचूर्णं पलाष्टकम् ॥६०॥
सर्वतुल्या बिल्वमज्जामजाक्षीरेण पेषयेत् ॥
तत्सर्वं बंधयेद्गाढं सार्द्रगोचर्मगर्भतः ॥
पक्षत्रयं धान्यराशौ क्षिपेद् हिंगु भवेत्ततः ॥६१॥

हिंगुकरणम् २

बब्बूलवृक्षनिर्यासं सामुद्रलवणं तथा ॥
त्वग्वर्ज्यं च कणा तुल्यं मेषीक्षीरेण पेषयेत् ॥६२॥
अस्य पिण्डस्य पादांशं शुद्ध हिंगु नियोजयेत् ॥
तत्सर्वं पूर्ववद्बद्धं चर्मणा दिवसत्रयम् ॥६३॥
निर्वाते लंबितं रक्षेत् हिंगु स्याच्छुद्ध हिंगुवत् ॥६४॥

हिंगुकरणम् ३

पलैकैकं गुडं शुंठी द्विकं टंकणगुग्गुलम् ॥

एरण्डबीजमज्जा च तुषवर्ज्यं पलद्वयम् ॥६५॥
निस्त्वक्माषा पलद्वंद्वमेकीकृत्य प्रपेषयेत् ॥
त्रिकर्षं हिंगु तन्मध्ये क्षिप्त्वा तोयेन लोलयेत् ॥६६॥
तत्सर्वं पूर्ववद्बध्वा सप्ताहाद्धिंगुतां व्रजेत् ॥६७॥

हिंगुकरणम् ४

द्वेपले शुद्ध हिंगु स्यादीडाक्षीरं च विंशतिः ॥
गाधूममाषयोश्चूर्णं प्रत्येकं तु चतुष्पलम् ॥६८॥
अलाबुपात्रमध्यस्थं तत्सर्वं लोलितं क्षिपेत् ॥
छायाशुष्कं भवेत्तावद्यावद्धिंगु शुभं भवेत् ॥६९॥

बंगकरणम् १

धत्तूरबीजचूर्णं तु वज्रीक्षीरेण भावयेत् ॥
शोष्यं पेष्यं पुनर्भाव्यं एवं घर्मे त्रिसप्तधा ॥७०॥
तद्वाप्यं द्रुतनागस्य दशमांशेन दापयेत् ॥
ढालयेत्स्नुक्पयोमध्ये तद्बंगं जायते शुभम् ॥
भावयेद्रजनीमध्ये तद्बंगं जायते शुभम् ॥७१॥

बंगकरणम् २

भावयेद्रजनीचूर्णं वज्रीदुग्धेन सप्तधा ॥
तद्वापं दशमांशेन द्रुते नागे प्रदापयेत् ॥ ॥७२॥
तद्वापं द्रुतनागस्य दशमांशेन दापयेत् ॥
तत् ढाल्यं त्रिफला क्वाथे पुनस्तद्वच्च वापयेत् ॥७३॥
टंकणं नवसारं च दत्वा सेच्यं नृमूत्रके ॥
द्रावितं च पुनर्ढाल्यं नृमूत्रे बंगतां व्रजेत् ॥७४॥

अम्लवेतसकरणम्

त्वग्बीजरहितं चिंचाफलं कांजिकसंयुतम् ॥
पक्त्वा कुर्याद्वस्त्रपूतं जम्बीराम्लं तु तत्समम् ॥७५॥
चांगेरीमातुलिंगाम्लैर्यथाप्राप्तं समाहरेत् ॥
वस्त्रपूतं तु तत्सर्वं पचेत्पादावशेषितम् ॥७६॥
सौराष्ट्री तुत्थकासीसं त्रिक्षारं पटुपंचकम् ॥

मूलसारं च तुल्यांशं सर्वं चूर्णं विनिक्षिपेत् ॥७७॥
पूर्वपक्वे तु पादांशं पुनर्मृद्वग्निना पचेत् ॥
घनीभूतं भवेद्यावच्चट्टकेनैव चालयेत् ॥
अम्लवेतसमित्येतज्जायते शोभनं परम् ॥७८॥

साहीकरणम्

त्रिफला भृंगकोरंट भल्लात करवीरकम् ॥
बीजाम्रसममेतेषां समांशं वोलकज्जले ॥७९॥
क्षिप्त्वा मर्द्यं ताम्रपात्रे पंचाहाज्जायते मषी ॥
तालपत्रेषु भूर्जेषु लिख्यते परमं दृढम् ॥८०॥

घृतकरणम्

नारिकेलात्फलरसं ग्राह्यं भागचतुष्टयम् ॥
तन्मध्ये घृतमेकं तु क्षिप्त्वा भाण्डे विलोलयेत् ॥८१॥
शतांशेन क्षिपेत्तस्मिन् रक्तशाकिनिमूलकम् ॥
मृद्वग्निना पचेत्किंचित् तत्सर्वं जायते घृतम् ॥८२॥

घृतकरणम् २

घृतं तोयं समं कृत्वा विंशत्यंशेन चुन्नकम् ॥
क्षिप्त्वा सर्वं तु मृद् भांडे क्षणं हस्तेन मर्दयेत् ॥
घृतं तज्जायते सर्वं न चाग्निं सहते क्वचित् ॥८३॥

घृतकरणम् ३

मेषीमेदः पंचपलं तिलतैलं च तत्समम्
पचेन्मृद्वग्निना तावद्यावत्फेनं निवर्तते ॥ ॥८४॥
द्विनिष्कं कांजिकं तस्मिन् क्षिप्त्वा वस्त्रेण चालयेत् ॥
पादांशं च घृतं तस्मिन् दद्यात्सर्वं घृतं भवेत् ॥८५॥

घृतकरणम् ४

तिलतैलं विपच्यादौ यावत्फेनं निवर्तते ॥
गुग्गुलुं निक्षिपेत्तस्मिन् किंचिद्दुर्गंधनिवृत्तये ॥८६॥
विंशत्यंशेन तोयस्य क्षिप्त्वा चुन्नं विलोलयेत् ॥
जलतुल्यं पूर्वतैलं मिश्रयेत्तत्सुशीतलम् ॥८७॥

मर्दयेन्मृण्मये पात्रे हस्तेन क्षणमात्रकम् ॥
घनीभूते धृतं चार्धं क्षिप्त्वा सर्वं घृतं भवेत् ॥८८॥

चन्दनकरणम्

संछेद्य निंबवृक्षं तु हस्तैकं रक्षयेदधः ॥
तस्य मूर्ध्नि बिलं कुर्यात्तत्रैव नवगुग्गुलुम् ॥८९॥
पूरयेत्तेन काष्ठेन बिलं रुध्वाथ लेपयेत् ॥
संधिं मृल्लवणेनैव शुष्कं गजपुटे पचेत् ॥९०॥
स्वभावशीतलं ग्राह्यं तन्मूलं चंदनं भवेत् ॥९१॥

कर्पूरकरणम्

पलत्रयं पचेद् भक्तं सम्यग्राजान्नतंदुलम् ॥
तद् भक्तं शीतलं कृत्वा गवां क्षीरैः प्रयत्नतः ॥९२॥
निष्कमात्रं च कर्पूरं क्षिप्त्वा तस्मिंश्च पेषयेत् ॥
शुष्कस्य वंशनालस्य स्थूलस्य तेन चोदरम् ॥९३॥
लेप्यमंगुलमानेन छायाशुष्कं च कारयेत् ॥
छित्वाथ कदलीपुष्पं तन्निर्यासेन पूरयेत् ॥९४॥
वंशनालं पुनर्वस्त्रखंडे रुध्वा च तन्मुखम् ॥
आतपे त्रिदिनं शोष्यं भूगर्तं निखनेत्ततः ॥९५॥
त्रिसप्ताहात्समुद्धृत्य शोषयित्वा समाहरेत् ॥
कर्पूरं तस्य गर्भस्थं रक्षेत्कर्पूरभाजने ॥
कर्पूरं जायते दिव्यं यथाबीजं न संशयः ॥९६॥

जवादीयांकस्तूरीकरणम्

पनसस्यार्धं पक्वस्य बीजान्येकस्य खण्डयेत् ॥
नवभाण्डे विनिक्षिप्य निष्कं शुंठी पलं तथा ॥९७॥
चूर्णयित्वा क्षिपेत्तस्मिन् तत्सर्वं द्रवतां व्रजेत् ॥
तेन घृष्ट्वा क्षिपेत्तस्मिन् चतुर्निष्कं च चन्दनम् ॥९८॥
मृद्वग्नौ पाचयेत्तावद्यावद्दारक्ततां गतम् ॥
तच्छीतलं काचपात्रे क्षिप्त्वा तस्योपरि क्षिपेत् ॥९९॥
चंपकं केतकी मल्ली जातीपुष्पाणि तत्पुनः ॥

दिनं शुभ्रपटे बध्वा मुखं तस्यैव रक्षयेत् ॥१००॥
ततः पुष्पाणि संत्यक्त्वा कस्तूरीं माषमात्रकाम् ॥
माषैकं शुद्धकर्पूरं तस्मिन्नैव विनिक्षिपेत् ॥१०१॥
निक्षिपेद्विंशदंशेन सम्यग्जावादिकामपि ॥
तत्सर्वं मथितं पूर्वं सम्यग्जावादि भाजने ॥१०२॥
वेष्टयेन्मल्लिकापुष्पैस्तद्भांडं दिवसत्रयम् ॥
सम्यग्भवति जावादि वर्णैः परिमलैरपि ॥१०३॥

कस्तूरीकरणम्

मधूकतैलं तैलं वा तिलोत्थं पलपंचकम् ॥
मुण्डीद्रावं दशपलं सर्वमेकत्र योजयेत् ॥१०४॥
मल्लिका मालती जाती केतकी शतपत्रिका ॥
अन्यानि च सुगंधीनि पुष्पाणि तत्र निक्षिपेत् ॥१०५॥
दिनैकं मुद्रितं रक्षेत् पुष्पं निष्पीड्य संत्यजेत् ॥
सिक्थकं विंशतिर्निष्कान् क्षिप्त्वा तस्मिन्पचेच्छनैः ॥१०६॥
यावत्तैलावशेषं स्यात् कर्पूरं चार्धनिष्ककम् ॥
निष्कं मार्जारजावादिं क्षिप्त्वा तदवतारयेत् ॥१०७॥
अन्यपात्रे विनिक्षिप्य शीतलं तत्पुनः पचेत् ॥
क्षणमात्रात्तदुत्तार्य क्षिपेज्जावादि भाजने ॥१०८॥
सांद्रं भवति तत्सर्वं यथाबीजं न संशयः ॥
पुष्पाणि बकुलस्यैव रत्नमालां समं समम् ॥१०९॥
तच्चूर्णमिक्षुदंडस्य कृतनालस्य चोदरे ॥
क्षिप्त्वा तस्य मुखं रुध्वा तन्मज्जाभिर्मृदा पुनः ॥११०॥
पुटेत्तृणाग्निना तावद्यावद्गंधो न दह्यते ॥
द्रवंति तानि पुष्पाणि मुखं भित्वा द्रवं हरेत् ॥१११॥
कस्तूरीचर्म निर्लोम मुस्तातुल्यं विचूर्णयेत् ॥
चूर्णस्य दशमांशेन सम्यक् कस्तूरिकां क्षिपेत् ॥११२॥
पूर्वद्रावेण तत्सर्वं पेषितं गोलकीकृतम् ॥
कस्तूरीमदनाकारा किंचित्कार्या प्रयत्नतः ॥११३॥
तत्सर्वं छायया शोष्यं मदना रक्षयेत्पृथक् ॥

गुटिकाः खण्डशः कृत्वा मदनैः सह मिश्रयेत् ॥
कस्तूरीचर्मणा बध्वा सम्यङ् मृगमदो भवेत् ॥११४॥

कुंकुम करणम् ( कंकु ) १

नारिकेरकपालं वा घृष्टं वा निम्बकाष्ठकं ॥
यत्किंचिच्छुभ्रकाष्ठं वा तोयेन सह कारयेत् ॥११५॥
तत्पादं रजनी चाथ तस्मिन्मध्ये विनिक्षिपेत् ॥
गैरिकं वा रजन्यर्धं तत्सर्वं कुंकुमं भवेत् ॥११६॥

कुंकुम करणम् ( कंकु ) २

पालाशपुष्पजं क्वाथं घर्मे धार्यं तु खर्परे ॥
विंशत्यंशं क्षिपेत्तस्मिन् पेषितं शुभ्रतंडुलम् ॥११७॥
तंदुलार्धं तथा चुन्नं सर्वं काष्ठेन लोलयेत् ॥
घनीभूतं भवेद्यावत्तावद् घर्मे प्रचालयेत् ॥
ततस्तेनैव वटिकाः कृत्वा स्युः कुंकुमोपमाः ॥११८॥

कुंकुमकरणम् ( कंकु ) ३

पालाशपुष्पपादांशं सम्यक्शुभ्रं च तंदुलम् ॥
पिष्ट्वाथ वटिकाः कार्या शोष्याः स्युः कुंकुमोपमाः ॥११९॥

दिव्यधूपः १

क्रमात्तरगुणं कुर्यात्कस्तूरी शशिकुंकुमम् ॥
नखमांसी सर्जरसं मुस्ता कृष्णागुरुः सिता ॥१२०॥
चंदनं च दशैतानि चूर्णितानि विमिश्रयेत् ॥
चूर्णं तुल्यैर्गुग्गुलुभिः सर्वमेकत्र कुट्टयेत् ॥१२१॥
स्तोकं स्तोकं क्षिपेत्तैलं शिलायां लोहमुष्टिना ॥
दिनमेकं प्रयत्नेन वर्तिका तेन कारयेत् ॥१२२॥
तदग्रज्वलितं कुर्याज्ज्वालां निवार्य तत्क्षणात् ॥
देवानां दिव्यधूपोयं मंत्राणां साधने हितः ॥१२३॥

दिव्यधूपः

पाषाणभेद चूर्णं तु गुग्गुलुं च पलं पलम् ॥
मांसी मुस्ता नखं बोलं चंदनागुरुवालकम् ॥१२४॥
लाक्षागुडं सर्जरसं सिताकर्पूरसंयुतम् ॥

प्रति निष्कद्वयं चूर्ण्य कस्तूरी कुंकुमं तथा ॥१२५॥
माषैकैकं क्षिपेत्तस्मिन् सर्वं कुट्याादुलूखले ॥
तिलतैलं क्षिपेत्किंचिल्लोहदण्डेन तद् दृढम् ॥१२६॥
यामैकं कुट्टयेत्सिद्धो दिव्यो धूपः शिवोदितः ॥
देवादेवाकरो देयः पूर्ववद्वर्तकीकृतः ॥
सर्वसौभाग्यजनकः सर्वमंत्रौघनायकः ॥१२७॥

पुष्पद्रुतिः

वज्रीक्षीरेण संयुक्तं शुद्धं वस्त्रं पुनः पुनः ॥
आतपे शोषितं कुर्यादित्येवं दिनसप्तकम् ॥१२८॥
जातीपुष्पपलैकं तु निष्कं चूर्णितटंकणम् ॥
क्षौद्रं निष्कत्रयं योज्यं सर्वमेकत्र लोलयेत् ॥१२९॥
मृत्पात्रे धारयेद् घर्मे रम्ये वा काचभाजने ॥
आच्छादयेत्तु वस्त्रेण जलसिक्तेन तत्क्षणात् ॥१३०॥
द्रवंति तानि पुष्पाणि युंज्याद्योगेषु तद्द्रवम् ॥
अनेनैव प्रकारेण पुष्पाणां च पृथक् पृथक् ॥
द्रुतिः कार्या सुगंधानां गंधवादेषु योजयेत् ॥१३१॥

धान्यवृद्धि करणम् १

मन्दारमूलमार्द्रायां भरण्यां वा कुशोद्भवम् ॥
ऊर्ध्वं संग्राह्य यत्नेन धवमालये विनिक्षिपेत् ॥१३२॥
प्रवातातिमुखं यत्तु तत्काष्ठं तु समाहरेत् ॥
धान्यस्य राशिगं कुर्याद्धान्यवृद्धिकरंपरम् ॥१३३॥

धान्यवृद्धिकरणम् २

कृकलासस्य वामाक्षि हेम्नावेष्ट्याभिमन्त्रितम् ॥
धान्याराशौ विनिक्षिप्य धान्यवृद्धिकरं परम् ॥१३४॥

॥ ॐ नमो भगवते क्ष स्मिते स्वाहा ॥

धनधान्यवृद्धिकरणम् ३

तस्यैव दक्षिणं नेत्रं हेम्नावेष्ट्य ततः क्षिपेत् ॥
यस्मिन्कस्मिन्भवे द्रव्ये धान्ये वा वृद्धिकारकम् ॥१३५॥

॥ ॐ अनिलदेवि आगच्छ आगच्छ स्वाहा ॥

द्रव्यादि वृद्धि करणम्

कृष्णचित्रकमूलं तु क्षिप्तं यस्मिन्सुवस्तुनि ॥

तत्सर्वं चाक्षयं नित्यं व्ययीकृत्य न क्षीयते ॥१३६॥
धनं धान्यं घृतं तैलं सुवर्णं नवरत्नकम् ॥
यत्किंचिद् द्रव्यजातं तदक्षय्यं तिष्ठति ध्रुवम् ॥१३७॥

धान्यवृद्धिकरणम् ४

मूलं सुश्वेतगुंजाया जलमध्ये विनिक्षिपेत् ॥
तन्मूलं धान्यराशौ च क्षिप्त्वा मंत्रविधानतः ॥१३८॥
तद्धान्यं वर्धते नित्यं भक्ष्यमाणं सहस्रशः ॥
मन्त्रखण्डे यथा प्रोक्तं गुंजामूलस्य साधनम् ॥
तथैवात्र प्रकर्तव्यं सिद्धिर्भवति नान्यथा ॥१३९॥
आदौ सर्वं दिशांतरेषु गमनं कृत्वा गुरोः संमुखात्
प्राप्तं भक्तिबलेन युक्तिविधिना सारातिसारं महत् ॥
तत्सर्वं धनवर्धनं निगदितं भूयिष्ठमध्वां(?) क्वचिद्
भूपानां विदुषां महामतिमतां विद्वान्भवेत्पालनैः ॥१४०॥

इतिश्री पार्वतीपुत्रनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके रत्नादिगंधवादन धनवर्धनो नामैकोनविंशति तमोपदेशः १९ ॥

---

## ॥ अथ श्री वादिखंडे विंशतितमोपदेशः २० ॥

सांगोपांगमनेकयोगनिचयं सारं वरं चोद्धृतं
युक्तं पारदबंधनं मृदुहठात् दृष्टं परं यन्मया ॥
तत्सर्वं सुगमं प्रवच्मि सहसा सिद्धाननादागतं
प्रत्यक्षानुभवेन वार्तिकगणैः साम्राज्यदं वीक्ष्यताम् ॥१॥

पारदबंधनम् १

शुद्धपारदभागैकं टंकणेन समं समम् ॥
मर्दयेत्त्रिफलाक्वाथैर्नरमूत्रैर्युतैस्ततः ॥२॥
कर्षांशा गुलिकाः कृत्वा माषचूर्णैर्जलान्वितैः ॥
सूतादष्टगुणैर्लिप्त्वा छायाशुष्कां धमेद् दृढम् ॥३॥
कोष्ठीयंत्रे वंकनाले किट्टं भित्वा समाहरेत् ॥

रसोसौ वर्तुलाकारः पण्डबद्धो भवत्यलम् ॥४॥

पारदबंधनम् २

आरण्यमल्लिकाद्रावैर्मूषां कन्याद्रवैश्च वा ॥
द्रवैर्हरिणखुर्यां वा नरमूत्रयुतं रसम् ॥५॥
त्रिदिनं मर्दयेत्खल्वे मूत्रं दत्वा पुनः पुनः ॥
तद्वटीं माषपिष्टेन लिप्त्वा धाम्यं च पूर्ववत् ॥६॥
तद्वत्सूतो भवेद्बद्धस्तच्छोध्यं काचटंकणैः ॥७॥

पारदबन्धनम् ३

मर्कटीमूलजद्रावैः पारदं मर्दयेद्दिनम् ॥
मर्कटीमूलजे पिण्डे क्षिपेत्तन्मर्दितं रसम् ॥८॥
तत्पिण्डं वज्रमूषायां रुध्वा तीव्राग्निना धमेत्
जायते खोटबद्धोयं सर्वकार्यकरक्षमः ॥९॥

पारदबन्धनम् ४

अर्कमूलं रविक्षीरैः पिष्ट्वा मूषां घनं क्षिपेत् ॥
तन्मध्ये जारितं सूतं क्षिप्त्वा रुध्वाथ रोधयेत् ॥१०॥
मृण्मये संपुटे तं च निरुध्याल्लोहसंपुटे ॥
ततो गजपुटे पच्यात् पारदो बंधमाप्नुयात् ॥११॥

पारदबंधनम् ५

जलकुंभ्या द्रवैः सूतं मर्दयेद्दिवसत्रयम् ॥
जलकुंभ्या दलैर्मूषां कृत्वा तत्र क्षिपेत्तु तत् ॥१२॥
रुध्वा तां वज्रमूषायां छायाशुष्कां पुटेल्लघु ॥
उत्पलैकैकवृद्ध्या तु विंशद्वारं पुटैः पचेत् ॥१३॥
ततो गजपुटं देयं सम्यग्बद्धो भवेद्रसः ॥१४॥

पारदबन्धनम् ६

एकवीराद्रवैर्मर्द्यं त्रिदिनं शुद्धपारदम् ॥
एकवीराकंदकल्कैर्वज्रमूषां प्रलेपयेत् ॥
तस्यां पूर्वरसं रुध्वा ध्माते बद्धो भवेद्रसः ॥१५॥

पारदबंधनम् ७

आरक्तक्षीरकंदोत्थद्रवैस्त्रीन् स्तन्यसंयुतैः ॥

त्रिदिनं पारदं मर्द्यं वज्रकंदद्रवैस्त्र्यहम् ॥१६॥
क्षीरकंदस्य कल्केन वज्रमूषां प्रलेपयेत् ॥
तत्र पूर्वरसं रुध्वा ध्माते बद्धा भवेद्रसः ॥१७॥

पारदबन्धनम् ८

कृत्वा ताम्रमयं चक्रं विस्तीर्णं चतुरंगुलम् ॥
उन्नतं चांगुलीकं तु सुदृढं वर्तुलं समम् ॥१८॥
गंधकं पारदं तुत्थं कुर्यात्खल्वेन कज्जलीम् ॥
तत्कज्जलं ताम्रतुल्यं मूषामध्ये विनिक्षिपेत् ॥१९॥
तं चक्रं मुषिकावक्त्रे दत्वा रुध्वाथ शोषयेत् ॥
तं पचेद्धंडिकायंत्रे द्वियामं लघुवह्निना ॥२०॥
उद्धृत्य ग्राहयेच्चक्राद्रसराजं पुनः पुनः ॥
तत्तुल्यं टंकणं काचमूर्ध्वाधस्तस्य दापयेत् ॥२१॥
अंधमूषागतं धाम्यमेवं वारत्रये कृते ॥
रसेन्द्रो जायते बद्धो ह्यक्षीणो नात्र संशयः ॥२२॥

पारदबंधन ९

शुद्धसूतं समं गंधं द्वाभ्यां तुल्यं च तालकम् ॥
मर्द्यमुन्मत्तकद्रावैः खल्वे यामचतुष्टयम् ॥२३॥
पातयेत्पातनायंत्रे दिनैकं मन्दवह्निना ॥
ऊर्ध्वलग्नमधःस्थं च तत्सर्वं तु समाहरेत् ॥२४॥
मर्द्यमुन्मत्तकद्रावैर्दृढं यामचतुःष्टयम् ॥
तद्गलं पूर्ववत्पाच्यं पुनरादाय मर्दयेत् ॥२५॥
पुनःपाच्यं पुनर्मर्द्य ऊर्ध्वाधःस्थं प्रयत्नतः ॥
सर्वं यावदधो भाण्डे तिष्ठते तावतावधिः ॥२६॥
तत्सर्वं पूर्ववन्मर्द्य गोलं कृत्वाथ शोषयेत् ॥
सम्यक् संपेषयेदम्लैर्नलिकं कुष्ठमेव च ॥२७॥
पीतांजनं वा पेष्यं च तेन गोलं प्रलेपयेत् ॥
वज्रमूषोदरे चाथ तेन कल्केन लेप्य वै ॥२८॥
गोलकं तापयेत्तत्र वंकनालेन तं धमन् ॥
खोटबद्धो भवेत्साक्षात् तीव्रधामानलेन तु ॥२९॥

पारदबन्धनम् १०

पलं सूतं पलं नागं द्वाभ्यां तुल्या मनःशिला ॥
पूर्ववत्क्रमयोगेन खोटबद्धो भवेद्रसः ॥३०॥

पारदबन्धम् ११

नागं तारं समं द्राव्यं तच्चूर्णं पलमात्रकम् ॥
शुद्धसूतं पलैकं च सर्वतुल्या मनःशीला ॥
पूर्ववत्क्रमयोगेन खोटबद्धो भवेद्रसः ॥३१॥

पारदबन्धनम् १२

पलं सूतं पलं तारं पिष्टमम्लेन केनचित् ॥
द्वाभ्यां तुल्या शिला योज्या पूर्वयोगेन पाचयेत् ॥३२॥

पारदबन्धनम् १३

तारवत् स्वर्णपिष्टीं च गंधकेन च पूर्ववत् ॥३३॥

पारदबन्धनम् १४

कृष्णाभ्रकस्य सत्वं च तीक्ष्णं कांतं च हाटकम् ॥
शुल्बं तारं च माक्षीकं समं सूक्ष्मं विचूर्णयेत् ॥
वज्रमूषागतं रुध्वा ध्माते खोटं भवेत्तु तत् ॥३४॥

पारदबन्धनम् १५

श्वेताभ्रकस्य सत्वं च तारं तीक्ष्णं च माक्षिकम् ॥
समं चूर्ण्य कृतं खोटं खोटांशं शुद्ध सूतकम् ॥३५॥
हरितालं द्वयोस्तुल्यं सूक्ष्मं मर्द्य च पूर्ववत् ॥
महदग्निगतं ध्मातं खोटं भवति तद्रसं ॥३६॥

पारदबन्धनम् १६

पारदं गंधकं तुल्यं मर्द्य कन्याद्रवैर्दिनम् ॥
तद्गोलं द्विगुणं गंधं दत्वा मूषाधरोत्तरम् ॥३७॥
रुध्वा संधिं विशोष्याथ काष्ठीयंत्रे दृढं धमन् ॥
तत्सूतं जायते खोटं गंधबद्धमिदं भवेत् ॥३८॥

पारदबन्धनम् १७

पंचांगं राजवृक्षस्य क्वाथमष्टावशेषितम् ॥
तद्द्रवं तु रसे क्षिप्त्वा पाच्यं यामद्वयं शुभम् ॥३९॥

चोवाबद्धो भवत्येष खोटो वै सर्वकार्यकृत् ॥४०॥

पारदबन्धनम् १८

चन्द्रवल्या द्रवैर्मर्द्यं त्रिदिनं शुद्धपारदम् ॥
टंकणेन तु संयोज्य वटिकां कारयेद् बुधः ॥
कोष्ठयंत्रगतं ध्मातं खोटबद्धो भवेद्रसः ॥४१॥

पारदबन्धनम् १९

भल्लातकानां तैलांतः पलमेकं क्षिपेद्रसम् ॥
यावत्तैलं पचेत्तावद् रविक्षीरं क्षीपन् क्षीपन् ॥४२॥
घट्टयेल्लोहदण्डेन खोटबद्धो भवेद्रसः ॥ ॥४३॥

पारदबन्धनम् २०

द्रवैः समूलकार्पास्या ( कामाक्ष्या ) स्त्रिदिनं मर्दयेत्समम् ॥
टंकणेन पदांशेन वटिकाः कारयेल्लघु ॥४४॥
वल्मीकमृत्तिकामाष गोधूमानां च चूर्णकम् ॥
समं मर्द्योदकेनैव मूषां तेनैव कारयेत् ॥४५॥
तदंतर्मर्दितं सूतं वटीं क्षिप्त्वा धमेद् दृढम् ॥
खोटबद्धो भवेत्सोपि अंधमूषागतो रसः ॥४६॥

पारदबन्धनम् २१

रसं पंचगुण चैव द्विगुणं श्वेतटंकणम् ॥
श्वेतवातारितैलानां मज्जामश्वस्य कोमला ॥४७॥
त्रिदिनं मर्दयेत्खल्वे नरमूत्रेण साधकः ॥
ततो गोधूमचूर्णं तु क्षिप्त्वा कुर्याद्वटीः शुभाः ॥४८॥
विशोष्याथ धमेत्पश्चात् काचटंकणयोगतः ॥
खोटबद्धो भवेत्सूतस्तेजस्वी सर्वकार्यकृत् ॥४९॥

पारदभस्म १

कर्कोटी लांगलीकंदद्रवैर्मर्द्यं दिनत्रयम् ॥
वंध्याकर्कोटकीकंदे तं रसं तु निवेशयेत् ॥५०॥
कंदबाह्ये मृदा लेप्यं सर्वतोंगुलमात्रकम् ॥
शुष्कं तुषपुटे पच्यात् त्रिदिनं परिवर्तयन् ॥५१॥
समुद्धृत्य पुनर्मर्द्यं पूर्वकंदद्रवैस्त्र्यहम् ॥

पूर्ववत्पुटपाकेन पारदो जायते मृतः ॥५२॥

पारदभस्म २

हंसपाद्या द्रवैर्मर्द्यं सप्ताहं शुद्धपारदम् ॥
क्षीरकंदोदरान्तर्वै क्षिप्त्वा कंदं मृदा लिपेत् ॥५३॥
करीषाग्नौ दिनं पच्यात्पूर्ववन्मर्दयेत्पुनः ॥
कंदे क्षिप्त्वा पचेत्तद्वत्ततो मर्द्यं च पूर्ववत् ॥५४॥
क्षीरकंदोदरे रुध्वा मृदा लिप्तं च शोषयेत् ॥
सम्यग्गजपुटे पच्यात् मृतो भवति निश्चितम् ॥५५॥

पारदभस्म ३

हंसपादीक्षीरकंदद्रवैर्मर्द्यं दिनत्रयम् ॥
रसं तत्क्रौंचपादांतः क्षिप्त्वा पादं मृदा लिपेत् ॥५६॥
करीषाग्नौ दिनं पच्यान्मर्द्यात्पूर्वद्रवैस्त्र्यहम् ॥
दिनं तद्वत्पुटे पच्यात्पुनर्मर्द्यं च पाचयेत् ॥
जायते भस्मसूतोयं सर्वकार्यकरक्षमः ॥५७॥

खोटबद्धरसस्य मुखकरणम्

उक्तानां खोटबद्धानां मुखं कुर्यात्तदुच्यते ॥
वचा चंडालिनीकंदं ब्रह्मदण्डीयमूलकम् ॥५८॥
गंधकं टंकणं तुल्यं भानुदुग्धेन पेषयेत् ॥
चणमात्रां वटीं कृत्वा पूर्वसूते द्रुते क्षिपेत् ॥५९॥
ऐकामेकां धमन्नेव वटिकासप्तकं क्रमात् ॥
ग्रसते सर्वलोहानि यथेष्टानि न संशयः ॥६०॥
ग्रासो देयो यथाशक्त्या पूर्ववन्मारयेत्पुनः ॥
मुखं बध्वा नियुंजीत तारे ताम्रे भुजंगमे ॥६१॥
तत्सर्वं जायते स्वर्णं वेधो दशगुणो मतः ॥
सिद्धयोगः समाख्यातः सम्यग्दृष्ट्वा गुरोर्मुखात् ॥६२॥

ताम्रस्य स्वर्णं १

सूतभ्रं गंधकं शुद्धं तृणज्योतीयमूलकम् ॥
तत्सर्वं मातुलिंगाम्लैर्दिनमेकं समं समम् ॥६३॥
शुद्धानि ताम्रपत्राणि तेन कल्केन लेपयेत् ॥

रुध्वा गजपुटे पच्यात्पुनरुत्थाप्य लेपयेत् ॥६४॥
एवं पुटत्रये पक्वं तत्ताम्रं कांचनं भवेत् ॥६५॥

ताम्रस्य स्वर्णं २

रक्तस्नूहीपयोभिश्च ताम्रपत्राणि लेपयेत् ॥
कारयेदग्नितप्तानि तस्मिन् क्षीरे निषेचयेत् ॥६६॥
इत्येवं सप्तधा कुर्याल्लेपतापनिषेचनम् ॥
समावर्त्य तु तत्ताम्रं दिव्यं भवति कांचनम् ॥६७॥

सहस्रवेधो कल्कः १

रसकं दरदं गंधं गगनं कुनटी समम् ॥
आरक्तस्नुक्पयोभिस्तन्मर्दयेद्दिवसत्रयम् ॥६८॥
तेन वेध्यं द्रुतं ताम्रं नागं वा तारमेव वा ॥
सहस्रांशेन तद्दिव्यं सुवर्णं जायते ध्रुवम ॥६९॥

नागस्य स्वर्णम्

रक्तस्नूहीभवैः क्षीरै रजनीं मर्दयेत् त्र्यहम् ॥
तेन नागस्य पत्राणि प्रलिप्तानि पुटे पचेत् ॥
पुनर्लेप्यं पुनः पाच्यं सप्तधा कांचनं भवेत् ॥७०॥

सहस्रवेधी कल्कः २

पद्मिनी पत्रपुष्पाभा विज्ञेया स्थलपद्मिनी ॥
भंगे रक्तं स्रवेत्क्षीरं ज्ञात्वा तामुद्धरेत्ततः ॥७१॥
पारदं गंधकं तालं माहिषी कुनटी समम् ॥
पूर्वोक्तपद्मिनीयुक्तं मर्दयेद्दिनसप्तकम् ॥
तेन शुल्बं भवेत्स्वर्णं सहस्रांशेन वेधितम् ॥७२॥

तारबीजकल्कः

नागं बंगं तीक्ष्णसारं तारं च क्रमशोत्तरम् ॥
पंचानां तु समं ताम्रं सर्वं मूषागतं धमेत् ॥७३॥
प्रकटं वंकनालेन यावत्तारावशेषितम् ॥
तत्तारं पद्मरागाभं जायते द्रावयेत्पुनः ॥७४॥
वेध्यं रसकसत्वेन पंचमांशेन यत्नतः ॥

तद्द् भवेत्कांचनं दिव्यं सिद्धयोग उदाहृतः ॥७५॥

रौप्यकरणम् बंगस्य

रक्तचित्रकपंचांगं छायाशुष्कं विचूर्णयेत् ॥
तद्वापं द्रुतबंगस्य रुध्वा रुध्वा त्रिवारकम् ॥७६॥
देयं तज्जायते तारं शंखकुन्देन्दुसन्निभम् ॥७७॥

स्वर्णकरणम् १

रक्तचित्रकमूलं तु कांजिकं शुद्धपारदम् ॥
कंगुणीतैलसंयुक्तं सर्वं कल्कं प्रलेपयेत् ॥७८॥
ताम्रपत्राणि तप्तानि तस्मिन् सिंचेत्रिसप्तधा ॥
एतत्ताम्रं द्विषट् भागं तारं षोडशभागकम् ॥७९॥
एकीकृत्य समावर्त्य तेन पत्राणि कारयेत् ॥
रक्तचित्रकमूलानि भल्लाततैलपेषितं ॥८०॥
अनेन पूर्वपत्राणि प्रलिप्तानि पुटे पचेत् ॥
एवं त्रिसप्तधा कुर्याद् दिव्यं भवति काञ्चनं ॥८१॥

सुवर्णकरणम् २

नागिनीकंद सूतेन्द्र रक्तचित्रकमूलकम् ॥
पिष्ट्वा तेनैव पत्राणि पूर्वोक्तानि प्रलेपयेत् ॥
तद्वत्पच्यात्पुटैरेवं दिव्यं भवति कांचनम् ॥८२॥

ताम्रघटस्य स्वर्णत्व प्राप्तिः

ज्योतिष्मतीभवैस्तैलैस्ताभ्रकुंभं प्रपूरयेत् ॥
मुखं रुध्वा क्षिपेद्भूमौ पृष्ठे तुषपुटं सदा ॥८३॥
एवं षण्मासपर्यंतं पुटयेदुद्धरेत् क्रमात् ॥
बहिस्तुषपुटे पच्यात्रिदिनं तद्दिवानिशम् ॥८४॥
तत्ताम्रं हाटकं तुल्यं समावर्तं तु कारयेत् ॥
क्षिप्ते ज्योतिष्मतीतैले सर्वं भवति कांचनम् ॥८५॥

ताम्रस्य स्वर्ण ३

क्षीरकंदभवे क्षीरे तप्तं ताम्रं निषेचयेत् ॥
शतवारं प्रयत्नेन तत्ताम्रं कांचनं भवेत् ॥८६॥

### रौप्यस्य स्वर्णम्

गंधकं रसकं ताप्यं पारदं रक्तचंदनम् ॥
मर्द्यं रुदंतिकाद्रावैरविच्छिन्नं दिनत्रयम् ॥८७॥
तेन तारस्य पत्राणि लिप्त्वा रुध्वा पुटे पचेत् ॥
इत्येवं सप्तधा कुर्यात् दिव्यं भवति कांचनम् ॥८८॥

### ताम्रस्य स्वर्णम् ४

कृष्णाया वाथ पीताया देवदाल्या फलद्रवम् ॥
विष्णुक्रांताद्रवं तुल्यं कृत्वा तेनैव मर्दयेत् ॥८९॥
सप्ताहं पारदं शुद्धं ततस्ताम्रं प्रलेपयेत् ॥
रुध्वा गजपुटे पच्यात्ततस्तीव्राग्निना धमेत् ॥९०॥
दशांशं तद्रसं क्षिप्त्वा दिव्यं भवति कांचनं ॥९१॥

### स्फुटितधातोर्मृदूकरणम् १

वसुभट्टरसेनाथ त्रिधा सिंचेत्सुतापितम् ॥
लोणवत्स्फुटितो धातुर्मृदुः स्यात्सिक्थको यथा ॥९२॥

### बंगस्य रौप्यम्

देवदाल्या फलं मूलं ईश्वरीफलजद्रवम् ॥
पिष्ट्वा तत्कल्कवापेन द्रुतं बंगं दृढं भवेत् ॥९३॥
भूयो भूयस्त्वयं वाप्यस्तारं भवति शोभनम् ॥९४॥

### ताम्रस्य स्वर्णम् तारस्य रौप्यम्

कृष्णपक्षे चतुर्दश्यामष्टम्यां ग्रहणेथवा ॥
नृकपाले श्वेतगुंजां वापयेच्छुद्धभूमिषु ॥९५॥
सेचयेत्सलिलं नित्यं यावत्फलवती भवेत् ॥
मंत्रपूजां ततःकृत्वा पुष्ये ग्राह्य फलानि वै ॥९६॥

॥ ॐनमो भगवति श्वेतवल्लि श्वेत पर्वतवासिनि सर्वकार्यं कुरुकुरु अप्रहते नमोनमः स्वाहा ॥ अनेन मंत्रेण सर्वकर्माणि कुर्यात् ॥

शुद्ध ताम्रपलं श्वेतं विंशत्युत्तरकं शतम् ॥
एकैकं पूर्वबीजानां सम्यग्रुध्वा धमेद् दृढम् ॥९७॥

तत्ताम्रं जायते तारं शंखकुन्देन्दु सन्निभम् ॥
तारं तज्जायते स्वर्णं सुशुद्धा बद्धरीतिका ॥९८॥

बंगवेधः

भूनागानां रसैर्मर्द्य शुद्धं तालं दिनावधि ॥
तत्पिण्डं हंडिकामध्ये तालकांशं निरोधयेत् ॥९९॥
ताम्रपत्राणि तत्पश्चात् ढंकणेन निरुध्य च ॥
हंडिका भस्मना पूर्या रुध्वा चंडाग्निना पचेत् ॥१००॥
पंचयामात्समुद्धृत्य निष्कटंकणसंयुतम् ॥
मूकमूषागतं धाम्यं गुटिकां तां समुद्धरेत् ॥१०१॥
स्वांगशीतं समाहृत्य मूषायां प्रकटं धमेत् ॥
वारत्रयं क्षिपेत्तस्मिन् वटिकां वेधनान्मुखम् ॥१०२॥
मुखं तस्य भवेत्तीव्रं शुद्धं बंगं द्रवत्यलम् ॥
यदा न ग्रसते तस्माद्वटी देया पुनः पुनः ॥१०३॥
जीर्णे शतगुणे बंगे ततस्ताम्रस्य दापयेत्
द्रुतस्य शतभागेन तत्तारं जायते शुभम् ॥१०४॥

नागमुखकरणम्

गंधकं धूमसारं च फट्करी टंकणं समम् ॥
एरंडबीजमज्जापि सर्वेषां द्विगुणा भवेत् ॥१०५॥
भूनागाः सर्वतुल्याः स्युः सर्वमेकत्र मर्दयेत् ॥
चणमात्रा वटीः कार्या ख्यातेयं वडवामुखा ॥१०६॥
शुद्धनागं द्रुतं क्षेप्यं तैले एरंडके पुनः ॥
द्राव्यं द्राव्यं पुनः क्षेप्यं यावद्वारं शतं भवेत् ॥१०७॥
पुनस्तस्मिन्द्रुते देया वटिका वडवामुखा ॥
द्वित्रिवारं प्रयत्नेन नागस्येत्थं मुखं भवेत् ॥१०८॥
ग्रसते सर्वलोहानि सत्वानि विविधानि च ॥
यदा न ग्रसते तस्माद्वटी देया पुनः पुनः ॥१०९॥

कठिनधातोर्मृदूकरणम् २

मधूकपुष्पी यष्टीकं रंभाकंदं घृतं गुडम् ॥
तिलतैलमजाक्षीरं क्षौद्रं च तुल्यतुल्यकम् ॥११०॥

तन्मध्ये कठिनं धातु त्रिधा सिंच्यात्सुतापितम् ॥
मृदुत्वं याति नो चित्रं सूत्रयोग्यं न संशयः ॥१११॥

कठिनधातोर्मृदूकरणम् ३

वसुभद्ररसेनाथ त्रिधा सिंच्य सुतापितम् ॥
लोणवत्स्फुटितो धातुर्मृदुः स्यात्सिक्थकोपमः ॥११२॥

कठिनधातोर्मृदूकरणम्

अतिस्थूलस्य भेकस्य निवार्यात्राणि तत्र वै ॥
चूर्णितं टंकणं क्षिप्त्वा तद्भाण्डस्थं खनेद्भुवि ॥११३॥
त्रिसप्ताहं समुद्धृत्य तद्वापे मृदुतां व्रजेत् ॥
स्वर्णं वा यदि वा रौप्यं मृदु स्यात्पत्रयोग्यकम् ॥११४॥

अभ्रग्रासी रसः

तृणज्योतीयमूलेन मातुलिंगरसेन च ॥
त्रिदिनं मर्दयेत्सूतं गगनं ग्रसते क्षणात् ॥११५॥

गुह्याख्यसूतेन नागवेधः

भूनागसूक्ष्मचूर्णं तु टंकणेन समं भवेत् ॥
तच्चूर्णं तु द्रुते नागे वाह्यं शतगुणं धमन् ॥११६॥
गुह्याख्यं तद्भवेत्सिद्धं ग्रासं तस्यैव वक्ष्यते ॥
शिला गंधक माक्षीकैर्भूनागद्रवपेषितैः ॥११७॥
मूषागर्भं लिपेत्तेन गुह्याख्यं तत्र निक्षिपेत् ॥
भुक्तं तस्मिन्क्षिपेत्स्वर्णं स्तोकं स्तोकं धमन्धमन् ॥११८॥
ग्रसते भारसंख्या तु मूषा लेप्या पुनः पुनः ॥
मुंचत्यसौ द्रुते नागे गुह्याद्गुह्यं प्रकाशितम् ॥११९॥

गुह्याख्यसूतेन बंगवेधः

भूनागं टंकणं तुल्यं सूक्ष्मचूर्णानि कारयेत् ॥
तं वाहयेद् द्रुते बंगे यावच्छतगुणं धमन् ॥१२०॥
ततः शतगुणं बंगं तस्यैवोपरि वाहयेत् ॥
स्तोकं स्तोकं धमन्नेव ग्रसते नात्र संशयः ॥१२१॥

गुह्यबंगकरणं तेन वेधः

तालकं सैंधवं तुल्यं भूनागद्रवपेषितम् ॥

मूषागर्भे लिपेत्तेन तद्वंगं तत्र निक्षिपेत् ॥१२२॥
स्तोकं स्तोकं क्षिपेत्तस्मिन् विडं दत्वा धमन्धमन् ॥
भारसंख्या ग्रसत्येवं गुह्यवंगमिति स्मृतम् ॥१२३॥
द्रुते वंगे विनिक्षिप्तं यावत्संख्या न संशयः ॥
तावद् द्रुते न संदेहः सिद्धयोग उदाहृतः ॥१२४॥
क्षिप्त्वाथ माहिषे शृंगे मर्दयन्नग्निना पचेत् ॥
निष्कमेकं भवेद्यावत्तावन्मर्द्यं क्षिपन् क्षिपन् ॥१२५॥
तद् भवेद्रसतुल्यं तु समादायाथ तत्समम् ॥१२६॥

गुह्ययोगः

पारदं शुद्धहेमाथ सत्वं भूनागसंभवम् ॥
चत्वारिंशन्नागभागा मर्द्यं जंबीरजद्रवैः ॥१२७॥
तद्गोलकं विशोष्याथ कल्के भूनागसंभवे ॥
मूषागर्भे विलेप्यादौ तस्यां गोलं निरोधयेत् ॥१२८॥
धमेत्तीव्राग्निना तावद्यावन्मात्रावशेषितम् ॥
सर्ववद्ग्रसते दत्ते गुह्याख्यं योगमुत्तमम् ॥१२९॥

कामधेनुः १

अथातः संप्रवक्ष्यामि गुटिकाबंधमुत्तमम् ॥
समजीर्णकृतं व्योम समतो रसं जारयेत् ॥१३०॥
रविसंख्यांशकं शुल्वं दत्वा पिष्टिं च कारयेत् ॥
धान्याभ्रकसमं गंधं शुल्वे क्षिप्त्वा विमर्दयेत् ॥१३१॥
तयोर्मूषाकृति कृत्वा पिष्टीमध्ये विमोचयेत् ॥
नरमांसेन संवेष्ट्य माषपिष्ट्या तथैव च ॥१३२॥
पचेदतसितैलेन मासमात्रं तु साधकः ॥
अक्षया कामधेनुश्च बंगस्तंभनकारिणी ॥१३३॥

कामधेनुः २

पारदे जार्य कृष्णाभ्रं रुक्ममष्टगुणं यदि ॥
रंजितं गंधरागेण नरमांसेन वेष्टितम् ॥१३४॥
माषपिष्ट्या प्रलिप्याथातसीतैलेन पाचयेत् ॥
कामधेनुरियं ख्याता नागस्तंभनकारिणी ॥१३५॥

कामधेनुः ३

रसात्पादांशकं हेम पिष्टिं कुर्याच्च सुंदराम् ॥
विलिप्य कामधेनुं च नागद्रावे नियोजयेत् ॥१३६॥
तं नागं कुरुते रुक्मं वांछितार्थेषु सिद्धिदम् ॥
गुटिकां कामधेनुं तां प्रत्यहं धारयेन्मुखे ॥
शस्त्रास्त्रैर्न च भिद्येत दिव्यदेहमवाप्नुयात् ॥१३७॥

तारवेधी कल्कः

शिलया मारितो नागः सूतराजसमन्वितः ॥
रंजितो गंधरागेण समहेम्ना च सारयेत् ॥
तारवेधः प्रदातव्यो दिव्यं भवति कांचनं ॥१३८॥

नागवेधः

शिलया रविदुग्धेन नागपत्राणि लेपयेत् ॥
मारयेत्पुटयोगेन दिव्यं भवति कांचनम् ॥१३९॥

सितस्वर्णवेधः

मेषीक्षीराम्लवर्गाभ्यां दरदं घर्मभावितम् ॥
शतधा तत्प्रयत्नेन शोष्यं पेष्यं खरातपे ॥१४०॥
सितस्वर्णस्य पत्राणि लिप्त्वा लिप्त्वा पुटे पचेत् ॥
एवं त्रिसप्तधा कुर्याद् दिव्यं भवति कांचनं ॥१४१॥

गगनग्रासः

तृणजातीय मूलं तु मातुलिंगरसेन च ॥
त्रिदिनं मर्दयेत्सूतं गगनं ग्रसते क्षणात् ॥१४२॥

सिद्धैर्गणैः सुरवरै रससिद्धि कामै
बैद्धं हठात्परममंत्रबलेन तैश्च ॥
तस्माद्विशिष्टमनुजैः कृतमंत्रजापैः
कार्यं ततो रसवरे वरबन्धनं च ॥१४३॥

इतिश्री पार्वतीपुत्रनित्यनाथसिद्धविरचिते रसरत्नाकरांतर्गते वादिखण्डे ऋद्धिखंडापरनामके विंशतितमोपदेशः २० ॥

॥ इति विंशतितमोपदेशः २० ॥

॥ श्रीरस्तु ॥ शुभं भवतु ॥

# ॥ समाप्तोयं ग्रन्थः ॥

——:o:——

ग्रन्थस्यास्य लेखनसमयः

विक्रम संवत् १६३२ मिते वर्षे आश्विन शुक्ल नवम्यां विद्याद्रौ लिखितोयं ग्रन्थः रा. रा. नारायण प्रभाकर विनोद् वडोदरानिवासि सकाशा दुपलब्धस्तद्ग्रन्थाधारेण विक्रमार्क संवत् १९७८ कस्य वैशाख मासे शुक्लपक्षे तिथौ पूर्णिमायां ता. ११-५-१९२२ दिने अयं ऋद्धिखण्डः राजवैद्य जीवरामेण कालिदासा-त्मजेन शास्त्रिणा गोंडल ग्रामनिवासिना रसशाला औषधाश्रमस्याध्यक्षेण काठियावाड प्रदेशांतर्वर्तिनि गोंडलग्रामे लिखितः ॥

——:o:——